presents no such difficulties as undermine its author in our estimation. The following may be cited some of the oddities to which the present day world is not used :—

p. 13. 10. यस्त्रैधं व्यूह्यमानः, समाः पर्याया भवन्ति, स समः—the independent clause समाः पर्याया भवन्ति occurring in between यस्त्रैधं व्यूह्यमानः and स समः is not co-relative and should not have been placed here.

p. 23. 17. छान्दसस्य पार्थिका वृत्तिर्योनि कल्पन्ते—strictly grammatically it ought to have been योनिरिति कल्पन्ते ।

p. 45. 11. सोऽशिथिला परिसंस्थिता भवति—here the relative pronoun सः in no way agrees with अशिथिला परिसंस्थिता ।

p. 49. 26. तत्र हि द्विभांगाः प्रकल्पयन्ते—प्रकल्प्यन्ते would be grammatically correct.

p. 53. 24. करिष्यन् भवति for करोति ।

p. 70. 2. ते व्यत्यासं प्रयुङ्क्ते—the subject and the verb do not agree.

p. 85. 15. षड्भगायमयनं समारप्स्यन्तीति—the use of Parasmaipada is incorrect.

p. 88. 5. तत्र खलु बृहद्रथन्तरे करोति, स्वराणामेव पृष्ठत्वे तिष्ठमानः—तिष्ठन् would be grammatically correct.

p. 89. 2. तत्र खलु बृहद्रथन्तरे करोति शुक्रियाणामेव पृष्ठत्वे तिष्ठमानः—तिष्ठमानः is grammatically incorrect.

p. 91. 11. मतसाम्बन्धात्—here lengthening of vowel in सा is wrong.

p. 96. 1. तदेतत्समरूपमभ्रयस्तवद्र्याणि च—the elision of visarga of °भ्रमयः before स्तव° is against the rules of sandhi.

p. 105. 1. भक्तयश्च कल्पन्ते—whereas LŚ. 9. 10. in strict conformity with the rules of Pānini reads कल्प्यन्ते.

p. 165. 26. तमेते द्विरात्रप्रभृतयोऽहर्गणा ब्रुवन्—the elision of अ in अब्रुवन् is not enjoined by grammar. The form seems to have been used in Śaśvad-Brāhmaṇa.

To this may be added the use of the following obsolete forms:—दिदर्शयिषन् (p. 60.8.); अदिदर्शयिषीत् (p. 60. 22); समविचारयिषीत् (p. 78. 18); अचिच्यावयिष्यन् (p. 107. 17); अचिच्यावयिषीत् (p. 136. 22); व्याविवर्तयिषन् (p. 128. 27): विच्यावयिषन् (p. 129. 16).

# अथ निदानसूत्रम्

## अथ प्रथमः प्रपाठकः

अथातश्छन्दसां विचयं व्याख्यास्यामः । UN. p. 1. 1.

त्रयश्छन्दःपादा भवन्ति ।

अष्टाक्षर एकादशाक्षरो द्वादशाक्षर इति ।

तन्मिश्रं दशाक्षरः ।

अष्टाक्षर आपञ्चाक्षरतायाः प्रतिक्रामति ।

'विश्वेषाᳬ हितः' इति । SV. 1. 2; 2. 824; RV. 6. 16. 1.

आचतुरक्षरतायां इत्येके ।

आदशाक्षरताया अभिक्रामति ।

'वयं तदस्य संभृतं वसु' इति । RV. 8. 40. 6.

एकादशाक्षर आनवाक्षरतायाः प्रतिक्रामति ।

'यदि वा दधे यदि वा न' इति । RV. 10. 129. 7.

आष्टाक्षरताया इत्येके ।

आपञ्चदशाक्षरतायां अभिक्रामति ।

'सत्रा दधानमप्रतिष्कुतँ श्रवाᳬसि भूरि' इति । SV. 1. 460.

---

1 In C only. 2 A2 adds ओं नमः सामवेदाय । इति निदानसूत्रे छन्दोविचितिसूत्रमारम्भः ॥; B adds ओं नमः सामवेदाय । हरि ओं ।; C adds ओं only, G1 adds नमः श्रीगणेशाय ॥ सामवेदाय ॥; G2 adds ओं नमः श्रीगणेशाय ॥ सामवेदाय ॥ ओं ॥; J adds ओं श्रीगणेशाय नमः ॥; K adds श्रीगणेशाय नमः । ओं ।, T adds हरि ओं शुभमस्तु ॥ दक्षिणामूर्तये नमः ॥ 3 Lacunæ in A1. 4 विजयं J 5 त्रिच्छ० T. 6 ०रा J, K. 7 ननु मि० C, G1, J, T, W; तनु मि० A1, B, G2, K, T, T3 8 ०तासा J, K. 9 आपञ्चदशा० A2 10 तद्दश J. 11 अष्टा० A2, A3, B, G1, G2, J, K, T, T1, T2, T3. 12 ०याभि० T. 13 अनि० G1, J, K. 14 ०ष्कृत० A1, A3, B, T, T2, T3. 15 भूः A3.

द्वादशाक्षर आ[1]नवाक्षरतायाः प्रतिक्रामति ।

'अनूपे गोमान्[2] गोभिरक्षाः' इति । SV. 2. 348; RV. 9. 107. 9.

आ[3]ष्टाक्षरताया इत्येके ।

आषोडशाक्षरताया अभिक्रामति विकर्षेण[4] ।

'त्वं[5] वृत्राणि हꣳस्यप्रतीन्येक[6] इत्पुरु'[7] इति । SV. 1. 248; 2. 761.

आष्टादशाक्षरताया इत्येके ।[8]

'अर्चामि सत्यसवꣳ रत्नधामभि प्रियं[10] मतिं कविम्' इति । SV. 1. 464; ŚB. 3. 3. 2. 12; AŚ. 4. 6. 3; ŚŚ. 5. 9. 7.

अथातो[11] वृत्ति[12]प्रदेशाः[13] ।

यत्र ह्रस्वमक्षरमुपोत्तमं पादस्य भ[14]वति सा जा[15]गती वृत्तिः ।

यत्र दीर्घꣳ सा त्रैष्टुभी[16] ।

ह्रस्वाक्षरस्योपरिष्टाद् व्यञ्जनसन्निपातेऽपि गौरवम् ।

अष्टाक्षरद्वादशाक्षरौ लघुवृत्ती,[17] दशाक्षरैका[18]दशाक्षरौ गुरु[19]वृत्ती[20] ।

एतैः खलु छन्दांꣳसि वर्तन्ते[21] ।

पथ्या[22]न्येवाग्रे सप्त चतुरुत्तराणि छ[23]न्दांꣳसि व्याख्यास्यामः ॥ १ ॥

चतुर्विꣳशत्यक्षरा गायत्री, त्रिप[24]दाऽष्टाक्षरपादा[25] । cp. UN. p. 1. 8; p. 2. 1; P. 3. 8; RPr. 16. 16.

अथापि चतुष्पदा[26] भवति, षडक्षरपादा । cp. UN. p. 1. 10; P. 3. 8; RPr. 16. 16.

तद[27]पि पाञ्चा[28]ला उदाहरन्ति—

---

1 आ is wanting in C. 2 Wanting in A2. 3 अष्टा० A2, B, C, G2, J, K, T, T1, T2, T3, अक्षर० G1. 4 विकर्षे A3, विशेषेण B. 5 तुवं A1, A2, A3, B, T2, T3. 6 हँसियः प्रतिनियेक A1; हंसीयप्रतिनियेक A2, हंस्यप्रानीनियेक A3; ०तीनियेक B, हम० J. इक्पु० B, इत्यु० C, इत्पू० A1, A2, A3, T, T2, T3. 7 इ is wanting in J 8 Wanting in T1. 9 ०या० T. 10 ०यमंनिकष्टम् T. 11 ०तो C. 12 वृत्य० C 13 ०देशः G1, G2, K, W. 14 Space left blank in C. 15 ज० A2, J, K, T, T2, T3. 16 ०भि A2, A3. 17 ०त्तिः A2; ०त्ति A3, G1, G2, J. 18 ०रैका० G1, G2. 19 गुरू० A1, A2, A3, गुन० T. 20 ०त्तीनि C, A3. 21 वर्दन्ते B. 22 पथ्यो० J. 23 Wanting in K, W. 24 ०पादा० C. 25 पादाः A2. 26 चतुःपादा C. 27 तदापि C, G1, G2, K; तद् था' पि W. 28 पञ्चाला C, G1, G2, J, K, T2, T3, W.

'पे[1]टिलालकन्ते पेटा[2]विटकन्ते।
त[3]त्र ककुवद्ध[4]स्तज्जग्धि प[5]रेहि॥' ई[6]ति।

अष्टाविंशत्यक्षरोष्णिक् त्रिप[7]दैव, पूर्वापराष्टाक्षरावुत्तमो द्वादशाक्षरः। cp. UN. p. 2. 2; P. 3. 18; RPr. 16. 29.

अथ यत्र मध्ये द्वादशाक्षरः सा[8] ककुप्। cp. UN. p. 2. 3; P. 3. 18; RPr. 16. 29.

यत्र प्रथमः सा पुरउष्णिक्। cp. UN. 2. 4; P. 3. 20; RPr. 16. 30.

अथापि चत्वारः सप्ताक्षरा[9] इत्यु[10]दाहरन्ति। cp. UN. p. 2. 6; P. 3. 22; RPr. 16. 32.

'नदं व ओदतीनाम्' इति। SV. 2. 862; RV. 8. 69. 2.

द्वात्रिंशद[11]क्षराऽनुष्टुप्, चतु[12]ष्पदा[13]ऽष्टाक्षरपादा। cp. UN. p. 2. 7; P. 3. 23; RPr. 16. 37.

अथापि त्रिपदा[14] भवति[15], मध्येऽष्टाक्षरोऽभितो द्वादशाक्षरौ[16]। cp. UN. p. 2. 8; P. 3. 24.

तां पिपीलिका[17]मध्येत्याचक्षते। UN. p. 2. 9; p. 5. 7.

मध्येज्योतिरिति बह्वृचाः।
ए[18]ष पादो य[19]तो य[20]तः परिक्रामेत्[21] तज्ज्यो[22]तिष्मेनां ब्रुवते[23]।[24]
पुरस्ता[25]ज्ज्योतिर्मध्येज्योतिरुपरिष्टाज्ज्योतिरिति।

षट्त्रिंशदक्षरा बृहती चतु[26]ष्पदैव, त्रयो[27]ऽष्टाक्षरा[28] उपोत्तमो[29] द्वादशाक्षरः। cp. UN. p. 2. 10, 11; P. 3. 26. 27; RPr. 16. 45.

तां पथ्येत्याचक्षते। cp. UN. p 2. 11; P. 3. 27.

---

1 पेटी पालकं ते C, पेटीयालकं तो G1, G2, K; पेटीपालकन्तो J; पेटिपाल० T; पेटीयालकंते W. 2 पेटा पिपिटकं ते C; पटापिट० J, K; पेटापिटकं ते० G1, G2, W; पेटाविकन्ते T. 3 त is wanting in J. 4 किकुवद्धस्नतुजग्ध्यु A1; किकुबन्धस्त० A2, ककवद्धस्नजग्ध्यु A3, ककुप्''' C; रीकवद्स्तनजग्धु G1; ०स्तनज्जग्धु G2; कीकुवद्धस्तनजग्धु J, कीकुवद्धस्त्नैनजग्धु K; किकुवद्धस्तज्जंग्धृ T1; यीकुवद्धस्तज्जग्धु W. 5 परिहि G1, G2, J, W; परीहि K. 6 इ is wanting in J. 7 ० पदैः C. 8 Wanting in T2, T3. 9 ०रं T2. 10 भवन्ति T3. 11 ०दष्टाक्ष० J. 12 चतुःपा० C; ०ष्पा० J. 13 ०दा अक्षर० A1; ०दाक्षर० J. 14 ० पद T. 15 T1 takes it as a separate sūtra. 16 ०रः A1, 17 ०लिक० A1, C, G1, G2, J, W. 18 एव C. 19 याता० J. 20 ० तेः T. 21 ० मेत J. 22 ज्यो० J. 23 ब्रुवीत C, G1, G2, K, W; वीत J. 24 Wanting in T1. 25 पुरतोज्यो० C; पुरता ज्यो० G1, G2. J. 26 Wanting in A2; चतुःपादैव C. 27 त्रयोदशाक्ष० A1. 28 ०रौ A2 क्षरा उपोत्तमो द्वादशा is wanting in B; ०रा द्वादशश्च उपो० C. 29 ०मौ A1.

अपि च स्कन्धोग्रीवीति[1] । cp. UN. p. 2. 14; P. 3. 28, 29; RPr. 16. 46.

अथ यत्र प्रथमो[2] द्वादशाक्षरः सा पुरस्ताद्बृहती । cp. UN. p. 2. 17; P. 3. 32; RPr. 16. 46.

यत्र[3] द्वितीयः सौरोबृहती[4][5] । cp. UN. p. 2. 15; P. 3. 30; RPr. 16. 46.

सैव[6] न्यङ्कुसारिणी । cp. UN. p. 2. 13; P. 3. 28; RPr. 16. 46.

यत्रोत्तमः सोपरिष्टाद्बृहती । cp. UN. p. 2. 16; P. 3. 31; RPr. 16. 46.

अथापि चत्वारो नवाक्षरा इत्युदाहरन्ति । cp. UN. p. 3. 1; P. 3. 33.

'उपेदमुपपर्चनम्[7][8]' इति । RV. 6. 28. 8; LŚ. 3. 3. 4.

अथापि त्रिपदा[9] भवति[10], द्वादशाक्षरपादा[11] । cp. UN. p. 3. 2; P. 3. 35.

'प्रत्नं पीयूषं पूर्व्यं[12] यदुक्थ्यम्' इति । SV. 2. 844; RV. 9. 110. 8.

तां सतोबृहतीत्याचक्षते[13] । cp. UN. p. 3. 2; P. 3. 36.

बार्हतमपि तृचं सतोबृहत्य इत्येवाचक्षते[14] । यथा—

'वयं घ त्वा सुतावन्तः' इति ॥ २ ॥ SV. 1. 261; 2. 214; RV. 8. 33. 1; PB. 12. 4. 3; 14. 4. 1.

चत्वारिंशदक्षरा[15] पङ्क्तिः, पञ्चपदाऽष्टाक्षरपादा[16] । cp. P. 3. 37, 48; RPr. 16. 54.

अथापि चतुष्पदा[17] भवति, द्वादशाक्षरोऽष्टाक्षर इति व्यस्तासम्[18] । cp. P. 3. 37.

तां सिद्धाविष्टारपङ्क्तिरित्याचक्षते । cp. P. 3. 42; RPr. 16. 62.

विपर्यासे[19] विपरीता[20] सैव । cp. RPr. 16. 58.

अथ यत्र[21] पूर्वावष्टाक्षरावुत्तरौ द्वादशाक्षरौ सोऽऽस्तारपङ्क्तिः[22] । cp. P.

1 ० वी A1; वीरिति B; ० वेति C; ० वीवेति G1, G2, J, K, W. 2 प्रथमे B. 3 B adds तद्. 4 सौरो० G1, G2. 5 ०तीयः सौरोबृहती G2, J. 6 ० वं A2, G1, G2, K. 7 इत्युपेदा० B. 8 ०दनमु० G1; ०दनतुमु० K. 9 Wanting in A1, T2; त्रयो T3. 10 Wanting in A1, T2, T3. 11 ०दाः C, T3. 12 पूर्वे T2. 13 ०हत्या० C. 14 इत्याच० A3, G1, G2, J, K, W. 15 ० शत्यक्षरा J, K. 16 ०पादाः A2; ०पदा J, K. 17 चतुःपादा C. 18 ०सः A1, A2, A3, T1, T2, T3. 19 पर्यासे C; G1 repeats the line बार्हतमपि तृचं from the second section within brackets. 20 A1, A2, A3, T, T1, T2, T3 add स्यात् . 21 A1 repeats यत्र. 22 A1, G1, J omit साऽऽस्तार० ... क्षरौ ( p. 5. 3 ).

पञ्च[1]विंशत्यक्षरापि[2] भवति, पञ्चपदा पञ्चाक्षरपादा। cp. UN. p. 4. 3; P. 3. 46.

तां[3] पदपङ्क्तिरित्याचक्षते ॥ ३ ॥ cp. UN. p. 4. 3; P. 3. 46.

चतु[4]श्चत्वारिंशदक्षरा त्रिष्टुप्, चतुष्प[5]दैकादशाक्षरपादा। cp. RPr. 16. 64.

अथ यत्रोत्तमोऽ[6]ष्टाक्षरस्तां ज्योतिष्मतीत्याचक्षते। cp. P. 3. 50; RPr. 16. 70.

पञ्चपदाऽपि भवति, चत्वारो[7]ऽष्टाक्षरा[8] एको द्वादशाक्षरः[9]। cp. RPr. 16. 71.

अष्टाचत्वारिंशदक्षरा जगती चतुष्प[10]दैव द्वादशाक्षरपादा[11]। cp. UN. p. 4. 6; P. 3. 51.

अथ यत्रोत्तमोऽष्टाक्षरस्तां ज्योतिष्[12]मतीत्या[13]चक्षते।

पञ्चपदाऽपि भवति,[14] त्रयोऽष्टाक्षरा द्वौ द्वादशाक्षरौ। UN. p. 4. 8.

स[15] एष समास[16] आष्[17]टपद[18]तायाः क्र[19]मते।

सैषैवं सती विष्टारपङ्क्तिः[20] प्रवृद्धपदा।

षट्पदा[21]ऽपि भवति, अष्टाक्षरपादा। cp. P. 3. 59; RPr. 16. 75.

'उभे यदिन्द्र रोदसी'[22] इति। SV 1. 379; RV. 10. 134. 1.

एतानि खलु सप्त चतुरुत्तरा[23]णि छन्दांसि[24] व्याख्यातानि।

प्रथमं प्रथमं चैवात्र[25] न्या[26]यं पथ्यं विद्यात्[27]।

एतासामेव[28] द्विपदा[29] भवन्ति[30]।

यत्र[31] द्वावष्टाक्षरौ सा गायत्र्याः।

यत्र द्वादशाक्षराष्टाक्षरौ सा विष्टारपङ्क्तेः[32]।

---

1 पञ्चविंश०...पञ्च is wanting in J. 2 ०रा भ० C. 3 तान् W. 4 चतुरश्च० G1, G2, J. 5 चतुःपदै० C. 6 ०मष्टा० A2. 7 ०रौं J. 8 ०रावेको A2. 9 क्ष is wanting in J. 10 चतुःपदैव C; चतुष्पदा J, T1, T2, T3. 11 ०पादैव T1. 12 ०निर्जागती० A3. 13 ०त्येवाच० A1, A2, C, G2, T, T2, T3; ०त्ये G1; 14 ०न्ति० T2. 15 समाष्ट स० A2. 16 ०सश्च C; समस समावेशः T3. 17 आष्टा० A2, कुष्ट० A3; अष्ट० B. 18 ०पदाना० T; ०पाद० T3. 19 क्रामनि A2; प्रतिक्रामनि T1. 20 ०ङ्क्तेः C. 21 ०दा K. 22 रोदसि J. 23 ०चतुरक्षराणां T. 24 सि is wanting in G1, G2. 25 त्वेवात्र A1, A2, A3, C, G1, G2, J, K, T, T1, T2, T3, W. 26 यं is wanting in J. 27 Wanting in T2. 28 ०समैव G1. एदनांमेव T. 29 ०दावथम...T. 30 Wanting in T2. 31 त्रयो G1, G2, J; त्र T. 32 ०पङ्क्ती A2; ०पङ्क्तिः C, G1, G2, T2, T3 ०पङ्क्ति J.

यत्रैकादशाक्षरौ[1] सा त्रिष्टुभः[2]।
यत्र द्वादशाक्षरौ सा जगत्याः[3]।
विषमपदाः[4]—
'शं पदम्' SV. 1. 441.
'प्र व इन्द्राय' SV. 1. 446.
'विश्वस्य' SV. 1. 450.
'इमा नु कम्' इति । SV. 1. 452; RV. 10. 157. 1.
नवाक्षरश्चतुर्दशाक्षरावै[5]कादशाक्षरस्त्रयोदशाक्षरौ षडक्षर[6]दशाक्षरावेकादशाक्षराष्टाक्षरौ[7]।
दशाक्षरपादा विराजं[8] एकपदाप्रभृतयः[9] आचतुष्पादाभ्यः[10]।
एकादशाक्षर[11]पादौ[12] अपि त्रिपदा विराज इत्येवो[13]च्यते।
यथा—
'अग्निं नरः' इति SV. 1. 72; RV. 7. 1. 1.
यथा[14]—
'अग्निं नरः' इति[15] ॥ ४ ॥ ibid.

[16]निदाने प्रथमः पटलः

ऊर्ध्वं[17] जगत्या[18] अतिच्छन्दसः[19]। cp. UN. p. 5. 16.
द्विपञ्चाशदक्षरप्रभृतयः, चतुरुत्तरौ[19] द्वौ सप्तवर्गौ[20], चतुश्शताक्षराऽऽसां[21] परार्ध्यौ[22]। cp. RPr. 16. 79.

तासां नामधेयानि—

---

1 ०रस्ता T. 2 ०भौ G1. 3 ग is wanting in G1, G2, ज is wanting in J. 4 ०पादा C, ०पादाः G1, G2, J, W. 5 ०दै० J. 6 षोडशाक्षर० G1, T1. 7 T2, T3 add here अथ यत्रोत्तमोऽष्टाक्षरस्ता ज्योतिष्मतीति। 8 ०जं J, K. 9 प्रभ ... ..T. 10 चतुःप० C. 11 एकाक्षर० G1, G2. 12 ०पदा K. 13 एवा० K. 14 Wanting in T. 15 इति छन्दोविचितौ प्रथमः पटलः ॥ A1; इति निदानवृत्तौ छन्दोविचितौ प्रथमः पटलः ॥ A2, निदानसूत्रे प्रथमः पटलः ॥ A3; पटलम् ॥ G1, G2, K; इति निदानवृत्तौ प्रथमः पटलः ॥ T1; छन्दोविचितिवृत्तौ प्रथमे पटले प्रथमः खण्डः। T2, T3; W reads here ॥ पटलम् (॥1॥). · 16 A2 reads श्रीः अथ द्वितीयः पटलः ॥ 17 जः अनि० T, ग is wanting in T2. 18 ०सौ C. 19 ०त्तरा C, G1, G2, J, T, W. 20 सप्तावर्गौ C; सपूवर्गौ J, ०वर्गौ G1. 21 ०राणां T1; सापरा० J; सामपराध्या T, सापरार्धा T2, सापरार्धा T3. 22 ०र्ध्ये A1.

विधृतिः[1][2] शक्व[3]र्यष्टिर्[4]त्यष्टिर्[5]महना सरित् स[6]म्पेति पूर्वस्य । UN p. 5. 17; P. 4. 5.

सिन्धुः[7] सलिलमम्भो गगन[8]मर्ण[9]व आपस्समुद्र इत्युत्तरस्य ।

तान्येतानि सर्वाणि कृतं[10]च्छन्दांसि भवन्ति ।

अथ प्राञ्चि[11] गायत्र्याः पञ्च कृतं[12]च्छन्दांसि ।

कृति[13]श्चतुरक्षरा । cp. UN. p 6. 1; P. 4. 3; RPr. 16. 89, 92.

प्रकृतिरष्टाक्षरा । cp. UN. p. 6. 1; P. 4. 3.

सं[14]स्कृतिर्द्वादशाक्षरा । cp. UN. p. 6. 1.

अ[15]भिकृतिः षोडशाक्षरा । cp. ibid.; P. 4. 3; RPr. 16. 89, 92.

आ[16]कृतिर्विंशत्यक्षरा[17] । ibid.

एता[18]सामन्त[19]रेष्वन्तस्था[20]श्छन्दांसि ।

द्वाविंशत्यक्षर[21]प्रभृतय[22]श्चतुरुत्तरास्त्रयः सप्तवर्गाः, द्विशताक्षरा[23]ऽऽसां परा[24]र्ध्या ।

तासां नामधेयानि—

रा[25]ट् सम्रा[26]ड् विराट् स्वरा[27]ट् स्ववशिनी परमेष्ठा[28]ऽन्तस्थेति प्रथ[29]मस्य । cp. UN. p. 5. 5, 6; p. 6. 12, 13; P. 3. 6; RPr. 17. 5. Ārṣ K. V. 20. b.

प्र[30]त्नं चा[31]मृतं च वृषा[32] च जीवं[33] च तृप्तं च रसा[34]श्च शुक्रमि[35]त्युत्तरस्य । *cp.* RPr. 17. 5.

---

1 धृ० G1, G2, J, K, W. 2 ०तः T. 3 शा० J, K. 4 ०ष्टिव्यष्ट्य० K. 5 ०त्यष्टिरंहस्सरि० B; ०त्यष्टिर्वाध्य० G1, G2; ०कर्यष्टिवाध्य० J, W; ०त्यम० T. 6 ०संविति G1, G2, J, G, W. 7 Wanting in A2. 8 गगमन० A2; गहन० C, G1, G2, J, K, T, W; गगभन० T3. 9 ०मम्प्सर्व० J; ०मा० K. 10 क्रतु० T2; कृतिश्छ० A2. 11 प्राञ्चा० B; प्राचि० G1, G2. 12 क्रतु० A1, A3; ०कृतिश्छ० A2. 13 कृत० J. 14 संस्कृ० B. 15 विकृतिः C, K, W; अधिकृतिः T. 16 उत्कृति० A1, A2, A3, G1, G2, J, K, T, T1, T2, T3, W; अभिकृति० C. 17 ०रैः C. 18 तासां० C; एताः ताम० T2. 19 ०न्तरष्यन्त० C; ०ष्वन्तरवा छ० J; ०रेष्वन्तःस्थाः T2, T3, W. 20 ०न्दा… T. 21 ०रा० T3. 22 तु is wanting in G1, G2. 23 ०राणां C. 24 ०र्ध्य A2; संपराध्या T. 25 विराट् G1, K. 26 संआड् J. 27 स्वराव० G1. 28 ०ष्ठा A2, ०ष्ठमन्त० A3; ०ष्ठान्तसस्थे० G1, G2; ०ष्ठीतस्थे० J; ०ष्ठान्तमस्थे० W. 29 पथ्यस्य B, C, G1, G2, K. 30 वृत्तं A1, A2, A3; प्रत्तं J, K (K bad originally प्रत्नम्), वत्तं T; wanting in T1; वृत्तश्च० T2; प्रत्तश्चा० T3. 31 अमृ० T1. 32 वृषवे जी० J. 33 जीवह तृ० T, जीवश्च T2, T3. 34 रसं च A1, A2, A3, B, G1, G2, T1, T2, T3, W. 35 ०मिति पूर्वस्य W.

अर्ण[1]श्चांशश्चाम्भश्चाम्बु च वार्याणि[2] उदकमित्युत्तमस्य[3] ।

तान्येतानि सर्वाणि द्वापर[4]च्छन्दांसि भवन्ति ।

अथ[5] प्राञ्चि[6] द्वाविंशत्यक्षरतायाः[7] पश्चान्तस्था[8]च्छन्दांसि, त्र्यक्षरप्रभृतीनि चतुरुत्तराण्या[9]रोहीणि[10] ।

हर्षीका[11][12] शर्षीका[13] सर्षीका[14] सर्वमात्रा[15] विराट्[16]कामेति ॥५॥ cp. RPr. 17. 20.

अथ निचृद्भुरिजः[17] ।

यां[18] एकेना[19]क्षरेणोनास्तौ[20] निचृतः । cp. UN. p. 5. 3; P. 3. 59.

यां[21] एकेन ज्यायस्यस्तौ[22] भुरिजः[23] । cp. UN. p. 5. 4; P. 3. 59.

तान्येतानि[24] सर्वाणि त्रेता[25]कलिच्छन्दांसि भवन्ति ।

तद्यत्[26] त्रेतास्थानं तौ[27] निचृतः[28] ।

अथ यत्[29] कलिस्थानं[30] ता भुरिजः ।

चतुष्टयेन[31] छन्दो जिज्ञासेत[32][33], पदैरक्षरैर्वृत्त्या[34] स्थानेनेति[35] । cp. RPr. 17. 21.

तेषामेकैकस्मिन्[36] दुष्यति[37] शेषेणैव[38] जिज्ञासेत[39] ।

न दुष्टस्य[40] छन्दसोऽन्येन[41] वृत्तेर्ज्ञानमस्तीति[42] विद्यात् ।

---

1 अर्णवश्चांशश्चाम्भ० A2, अर्णश्चाम्भश्चाप्यश्चाम्बु वा० C; अर्णश्चाम्बचाम्बु G1, अर्णश्चाम्भश्चाम्बचाम्बु G2, J, K, अर्णश्चाम्भश्चाम्बु T1; अर्णश्चाम्बश्चाम्बचाम्बु W. 2 वार्या A1, चायाप A3; वार्याम K; चाय्याप T. 3 ०त्तरस्य C, G1, G2, J, K, T, W; ०त्तनस्य T2, T3. 4 ०रच्छ० A2, A3, G1, G2, K. 5 एष W. 6 प्राञ्चिका A2; प्राचि K; प्राञ्च T2, T3. 7 ०क्षरायाः C, T, W; ०क्षवायाः G1, G2. 8 पश्चान् स्था C; ०न्त (:) स्था० W. 9 ०राणि C; ०राणि रोहीणि G1, G2, J, K, W, ०राणि रोहिणी T. 10 ०हिणी A2; ०हेणि A3. 11 हर्षिका A1, A2, A3, B; वर्षीका G1, G2, J, K, W. 12 A2 adds संमिका. 13 शर्षिका A1, A2, B, T1, T2, T3; wanting in A3; सर्षीका C. 14 सर्षिका A1, B; सर्विका A2; wanting in A3, T; मर्षीका C. 15 सर्पमाला A1; wanting in A2, B; सरोमात्रा A3; ०र्वत्र मा० T 16 ०श० G1; wanting in T3. 17 भूरिजे A2. 18 अथ य G1; अथ या G2, W. 19 देके० T2, T3. 20 ०स्तानि नि० A2. 21 G1, G2, K, T, W add अथ; अथ T1. 22 ०स्तां A2. 23 भू० A1, A2, A3. 24 तानि T2. 25 त्रेता is wanting in T2, T3. 26 T1 leaves here a space of six lines. It begins again with देवासुर० ( see p. 10. 1 ). 27 तानि नि० T2. 28 वृचतः A3; ०दे T. 29 वद् T 30 ०न G1, G2; ०नां T2. 31 च येन A3; ०येव J; ०यैव K. 32 विजि० G1, G2, J, K, W. 33 ०स्ते A3. 34 ०रैवृत्या A1, A2; ०रैर्वृइत्या A3, ०रैः स्मृत्या T2, T3. 35 स्थानेति T2, T3. 36 ०मेकौक० G1. 37 वृत्तिश्च० C; मुष्यति T. 38 ०णोव J. 39 जिर्जत C. 40 Lucanæ in T. 41 ०सो नोन C; ०सौ० K. 42 वृत्तेर्वर्गन० C, वृत्तेर्जानन० G1; ०त्तेन ज्ञा० K.

अथ दे[1]वासुरच्छन्दांसि ।

एकाक्षरप्रभृतीन्ये[2]कोत्त[3]राण्यारोहीणि देवच्छन्दांसि[4] ।

सप्ताक्षरा जगती, अष्टाक्षराऽति[5]च्छन्दाः ।

पञ्चदशाक्षरप्रभृतीन्येकावाञ्छि[6] प्रत्यवरोहीण्य[7]सुरच्छन्दांसि ।

नवाक्षरा जगती, अष्टाक्षरा[8]ऽतिच्छन्दा[9]ः ।

अथ प्रजापतेश्छन्दांसि—

अष्टाक्षरप्रभृतीनि चतुरुत्तराण्या[10]रोहीणि ।

द्वात्रिंशदक्षरा जगती,[11] षट्त्रिंश[12]दक्षराऽतिच्छन्दाः ।

तेषां त्रयं त्रयं समेत्यैकै[13]कमृषिच्छन्दो भवति ।

तदेष श्लोकः[14]—

काश्चित्[15] स्त्रि[16]यो द्व्यक्षरै[17]रेकविंशति[18]स्सप्त भूत्वा[19]नु भवन्ति[20] कर्मभिः ।
पञ्चाशतैः[21] पञ्च नपुंसकानां द्वे चा[22]धिके विभ्र[23]ति[24] ऽयक्षराणाम्[25] ॥
देवासुराणां छन्दोभिरात्मनश्च प्रजापतिः ।
सप्तवर्गं च[26]कारैकमृषीणां यज्ञवोढवे[27] ॥
यस्य कस्यचि[28]च्छन्दसः[29] सम्पदं कश्चिदिच्छति ।
चतुर्थं[30] तस्य सङ्ख्यार्थे[31] तावती[32]राहरेदृचः ॥ RAn. p. 45. 4, 5
यदि[33] तच्छन्द आहरेदे[34]न्यदन्यस्य सम्पदे ।
चतुर्थं तस्य सङ्ख्यार्थे विद्यात्तास्तावती[35]रृचः ॥ ६ ॥ RAn. p. 45. 6, 7.

अथावसानानि ।

---

1 T1 resumes from here (see p. 9 note 26). 2 ०भृत्येको० T2, T3. 3 ०कोनूराणि रौहीणि C; ०राणि रोहोणि G1, G2, W. 4 ०राणि छ० J, K. 5 ०न्दै G1, G2, J. 6 ०वाञ्छि T 7. ०रोहिण्या० A2; ०रोहीण्या० C; ०रोहिण्य० T. 8 ०रैवाति० C, G1, G2, T, T1, W. 9 ०न्द A2. 10 ०राणि रोहिणी C, T; ०णि रोहीणि K, W. 11 ०ति T. 12 ०शरदक्षरा G1, G2. 13 ०त्ये० A2, A3, C, G1, G2, K. 14 Wanting in T1. 15 कास्वित् A1, A2, A3, B, C, T1, T2; कास्विति T. 16 द्रयो T2. 17 ०क्षरे रमे० J, K. 18 ०तिस्त्रिस्तस्र T2. 19 ०त्वा न T2. 20 ०ति G1, G2. 21 ०तं J, T2, T3. 22 शताधिके A2. 23 विभृति T; बिम्यति T2. 24 त्यक्ष० G1, G2, W. 25 ०णामिति J, K, W. 26 च ··· कैषामृ० T2. 27 वोदवै B; वोढाव G1; वोढावे J, K. 28 कस्य च छ० C, G1, G2, J, K, W. 29 ०न्दसिस्सं० A1. 30 ०र्थं T2. 31 ०ङ्ख्यायास्ता० A2; ०ङ्ख्यायन्ता A3; संख्या J, K. 32 भवती० A3; यावती हरे ऋत्विति T2. 33 यदुत छ० A1, G1, G2, J, K, T, T3, W; यद्दतच्छ० C; यदुक्त छ० T2. 34 ०रेदन्यदस्य C; ०रेदन्यस्य G1, G2, K; ०रेदन्यस्य (कस्य) W. 35 ०या A2.

एकपदाद्विपदानामन्ततोऽवसानम् ।
त्रिपदाप्रभृतीनां द्वावुक्त्वा शेषमाह—
आषट्पदाभ्यो भवति ।
तत्र त्रिपदानामन्ततोऽवसानम् ।
'दुहीयन्मित्रधितये' इति । RV. 1. 120. 9.
यथा चतुष्पदायां त्रिषु ।
'आ नो वयोवयःशयम्' इति । SV. 1. 353.
तथा पञ्चपदायाम् ।
'यन्मे यमम्' इति । LŚ. 2. 10. 9; PB. 1. 5. 18.
अथापि चतुर्षु ।
'अग्ने तमद्य' इति । SV. 1. 434; 2. 1127; RV. 4. 10. 1.
अथापि द्वौ द्वावथैकम् ।
'अभि न इडा यूथस्य माता' इति । RV. 5. 41. 19.
अथापि द्वावुक्त्वाऽथैकमथ द्वौ ।
'तव त्यन्नर्यं नृतः' इति । SV. 1. 466; RV. 2. 22. 4.
षट्पदायां द्वयोर्द्वयोरवसानम् ।
'उभे यदिन्द्र रोदसी' इति । SV. 1. 379; 2. 440; RV. 10; 134. 1. PB. 13. 10. 3.
अथापि त्रिषु ।
'अपि वृश्च पुराणवत्' इति । RV. 8. 40. 6.

---

1 पदानां द्वि० T, ०पद० T1. 2 द्विपदा० J. 3 ०मह G1, G2, J. 4 आ is wanting in A3, C, T1. 5 T1, W take भवति in the beginning of the next sūtra, ०न्ति T2, T3. 6 तद् C; नु G1, G2; तु J, K, T, W; अथ T3. 7 ०या० C, K, T, T1, W. 8 ०सानां G1, G2, J. ०नं भवति T2. 9 दुहिय A1, A3; दि दु० G1, G2, J, K; महीयन् T2; दुह T3. 10 तथा C, G1, G2, K, W; T2, T3 omit this sūtra. 11 त्रिष्टुभो C. 12 आ नो is wanting in C. 13 ०शा० T2, T3. 14 ०याः T2. 15 यण्मे A3; यन्मे T; यमे T2. 16 यम् A3; यमनि G1, G2, W. 17 चतुष्पदेषु A2, T1. 18 Wanting in C, G1, G2, K, W. 19 द्य is wanting in J. 20 मपि G1, G2, J, W; अहि T2, T3. 21 Wanting in T. 22 मिडा B, T2; रा G1, G2, J, K, W. 23 यूथमस्य T; यूथन्य T3. 24 तथा० T2. 25 ०क्त्वाथैनम० T2. 26 त्यन्नर्ध्यां B; सन्नर्यं T2, T3. 27 नृतो A1, B, T; मृतो T2, T3. 28 ०या T, ०पदावाग्द० T2, T3. 29 Wanting in T1. 30 प्रवन A3. 31 पराग्नवदति । A2; पुराणादिवदिति । T2.

सप्तपदायां त्रीनुक्त्वा द्वौ द्वौ परान्[1]।

'अग्निं होतारं मन्ये दास्वन्तम्' इति। SV. 1. 465; 2. 1163; RV. 1. 127. 1.

अथापि द्वौ द्वावथ त्रीन्।

'प्रो ष्वस्मै पुरोरथम्' इति। SV. 2. 1151; RV. 10. 133. 1.

अष्टपदाप्रभृतीनां प्र[2]श्लाले[3]मवसानं[4] विद्य[5]ते।[6]

तत्र[7] मध्य[8] एव[9] पदस्य[10] नावस्येत्[11]।

अर्था[12]भिप्रापणा[13]न्न्यूनीभा[14]वोऽर्था[15]भिप्रापणादतिरेकः।

अथ यत्रैतदक्षरमागच्छति नां[16]मिति वां[17]मिति वा तदु[18]तोनीकरोति।

एका[19]क्षरभाविनो वा[20] सन्धयः[21]।

तद[22]प्येतौ श्लोकौ भवतः—

चत्वारि सन्धिजातानि यैश्छ[23]न्दो ह्र[24]सते नच।

प्रश्लिष्ट[25]मभिनिहितं क्षिप्रस[26]न्धिर[27]भिश्रुवम्॥ RAn. p. 48. 6, 7.

एता[28]नि सन्धि[29]जातानि मिमा[30]नश्छन्दसोऽ[31]क्षरैः।

द्वैधं[32] कुर्याद[33]सम्पूर्णं सम्[34]पूर्णं किञ्चि[35]न्नेङ्गयेत्॥ इति। RAn. p. 48. 8, 9.

छन्दसां विचयं जानन्[36] यः शरीराद्विमुच्यते।

छन्दसामेति सालोक्यमानन्त्यौ[37][38]याश्नुते श्रियम्॥ इति।

---

1 Wanting in C; परौ G1, G2, J, K, W. 2 C, G1, G2, J, K, T, W add न; T3 adds तु. 3 °तमवसम्पद्यते। A3; ज्ञातं व° T. 4 °नं नियतं न वि° A2. 5 विद्यात् T2, T3. 6 *Wanting in* T1. 7 नव K. 8 मध्यम T2. 9 एवोवस्येत्। T. 10 पाद° T1; °पदस्यैवं T2. 11 स्यात् T2. 12 अर्थापि° A2; अथापि° B. 13 °न्न्यून° T2, T3. 14 भावाऽ° J. 15 °र्थानभि° G1, G2, J, K, W. 16 तामिति C; तन्नामशं वोतव्यक्ते तदपि पदान्वोनी° T2. 17 Wanting in A2, C, G1, G2, J, T, W. 18 तदुतोनीकरोति C; तदुतोनीकारोलाति G1, तदुतोनीकालाति K; तद्द्हितोनी-करोति T1; तदुतोनिति T3. 19 यद्देका T2. 20 यदा T2; *wanting in* T3. 21 T2 adds वा विकल्पेनोनीकुर्वन्ति. 22 तदथैतौ C; तदथैतौ J; तदसैतौ T. 23 यैः श्लोको T1. 24 संस्रते B; 25 प्रविष्ट° B. 26 क्षिप्रमथप्रद्रुतम् C: क्षिप्रसन्ध्युपद्रुतम् G1, G2, J, K, W. 27 रभिद्रुतम् T. 28 तानि T2. 29 सन्ध्य° K. 30 समानं छ° B; मिमांनाश्छ° J; मिमानछ° T; इमानि छ° T2. मिमानच्छ° T3; 31 °न्दो अक्षरैः C, G1, G2; °न्दो क्षरैः K. 32 ज्ञेयं T2. 33 °र्यात्सं° C. 34 न पूर्णे C, G1, G2, J, K, W; wanting in T2. 35 किञ्च नो गयेत् A2; lucanæ in A3. किञ्चन नेङ्ग° C; किञ्चिदूनं गेयम् T2; किञ्चित् पूर्णे न गेय व मि T3. 36 जानातः G1, G2; जाननः J; जानानः K. 37 Wanting in K. 38 °न्त्यमश्नुते A1, A3; °न्त्यानश्नुते A2; °न्त्याय श्नुते: C; °न्त्याया श्नुते *G1, G2, J, K*; °न्त्यामश्नुते *T2*; °न्त्यादश्नुते *T3*.

श्रियमिति ॥ ७ ॥

नि[1]दाने द्वितीयः पटलः[2]

अथा[3]तः स्तोमान् व्याख्यास्यामः ।

ते[4] द्वया भवन्ति ।

यु[5]ग्मन्त[6]श्चायुजश्च ।

तेषां विवेकः ।

पङ्क्ति[7]प्रभृतयो द्व्यु[8]त्तरा अ[9]युजः । cp. LŚ. 6. 5. 16.

द्विकप्रभृतयो द्व्यु[10]त्तरा यु[11]ग्मन्तः । cp. LŚ. 6. 5. 16.

उभये स[12]न्तो द्वया भवन्ति—समौ[13] विषमाश्च । cp. LŚ. 6. 5. 17.

यत्त्रैधं[14] व्यू[15]ह्यमानः, समाः पर्याया भवन्ति, स[16] समः ।

अतो[17]ऽन्ये[18] विषमाः ।

विष[19]मा द्वया भवन्ति—एकाधिशयौ[20]श्च द्व्यधिशयौश्च ।

य एकया समतामतिक्रामति स[21] एकाधिशयः । cp. LŚ. 6. 5. 18.

यो[22] द्वाभ्यां स द्व्यधिशयः । cp. LŚ. 6. 5. 19.

त्रिक[23]प्रभृतयः षडुत्तराः समाः[24] ।

तेषां[25] पर्यायकृ[26]तिः ।

त्रयः पर्यायाः ।

पर्यायास्त्रिविष्टा[27]वाः ।

प्रथमे पर्याये प्रथमा तृ[28]चभागा, तामेव पर्यायभागेत्याच[29]क्षते । cp. LŚ. 6. 5. 1.

मध्यमाऽऽवापः । cp. LŚ. 6. 5. 2.

उत्तमा[30] परिचरा । LŚ. 6. 5. 3.

म[31]ध्यमे पर्याये प्रथमा परिचरा, मध्यमा तृचभागा, उत्तमाऽऽवापः । cp. LŚ. 6. 5. 4.

---

1 Wanting in C, T. 2 ॥ द्वितीयः ॥ T; इति निदानवृत्तौ द्वितीयः पटलः T1; द्वितीयपटले तृतीयः खण्डः T2, T3; (पटलम् ॥२॥) W. 3 ०ता J. 4 तेष्वर्थो भ० C. 5 G1 adds एकप्रभृतम; G2 adds पङ्क्तिप्रभृतिम. 6 ०त० C. 7 एकी० B; एक० C. 8 द्व्यू० J. 9 आ० G1 10 द्व्युत्तरा J. 11 अयुग्मन्तः B; युग्मतः C. 12 सतो B. 13 समाश्च C, G1, G2, J, K. 14 यत्त्रैयं B. 15 व्युह्य० C, G1, G2, J, K. 16 Wanting in J, K. 17 अतो is wanting in G1. 18 Wanting in G1, G2, J. 19 ०यो C. 20 ०य० C. 21 B adds य. 22 ये B; wanting in G1, G2, J. 23 J omits the portion त्रिकप्रभृतयः ...प्रथमा ( line 19 ). 24 Wanting in C, G1, G2, J. 25 C adds समाः 26 ०कृतयः C, J. 27 ०विष्टुत्याः C 28 त्रिभागा J. 29 च wanting in G1, G2. 30 ०त्ता J. 31 मध्यमे ...परिचरा wanting in C.

उत्तमे पर्याये प्रथमाऽऽत्रापः, मध्यमा परिचरा, उत्तमा तृचभोगा[1] । cp. LŚ. 6. 5. 5.
सैषा[2] विष्टावकृतिः[3] ।
एको[4]धिशयप्रभृतिषु साधिष्ठ[5]मुपपद्यते ।
एकि[6]प्रभृतयः षडुत्तरा एकाधिशयाः ।
तेषां पर्यायकृतिः ।
समपर्यायैर्विषमा वर्तन्ते[7] । cp. LŚ. 6. 5. 21.
पर्याया[8] हि ते भवन्ति ।
यावभितः समावयुजौ तयोः पर्यायान्[9] संहरेत् । cp. LŚ. 6. 5. 22.
पूर्वस्यैकम्, उत्तर[10]स्य द्वाविति ।
युग्मतां च द्व्यधिशयानां युग्मायुक्पर्यायाणाम्[11] ।
सतामेष[12] न्यायः[13] ।
अथ[14] पूर्वस्य द्वौ, उत्तरस्यैकमिति ।
[ यथा[15] युग्मतां द्व्यधिशयानां ] युक्पर्यायाणाम्, एवमयुजामेव[16] द्व्यधिशयानां युग्मायुक्पर्यायाणाम्[17] ।
पङ्क्ति[18]प्रभृतयः षडुत्तरा द्व्यधिशयाः[19] ।
तेषां पर्यायकृतिः ।
सम[20]पर्यायैर्विषमा वर्तन्ते[21] ।
पर्याया[22] हि[23] ते भवन्ति[24] ।
यावभितैः[25] समावयुजौ तयोः पर्यायान्[26] संहरेत् । cp. LŚ. 6. 5. 22.
पूर्वस्य द्वौ,[27] उत्तरस्यैकमिति । cp. LŚ. 6. 5. 23.
*युग्मतां चैकाधिशयानां युग्मायुक्पर्यायाणाम्[28] ।*
पूर्वस्यैकम्, उत्तरस्य द्वाविति ।
यथा युग्मतामेकाधिशयानां युक्पर्यायाणाम्, एव[29]मयुजां द्व्यधिशयानां युग्मायु[30]क्पर्यायाणामित्ययुजः ॥ ८ ॥

---

1 गा is wanting in G1; तृचभा is wanting in J. 2 G1 omits सैषा वि. 3 °ष्टापकृतिः B. 4 एकविंशप्र° C, G1, G2, J, K. 5 °ष्ठथिमु° J. 6 एके प्र° G1. 7 °ते C. 8 अप° J, K. 9 °यन J. 10 °ता° J. 11 °र्याणाः G1, °र्याणा° J. 12 C, G1, G2, J, K add एव. 13 °योः G1, G2. 14 C, G1, G2, J, K add युक्पर्यायाणां. 15 Wanting in B. 16 °मेकाधि° C, G1, G2, J, K. 17 B adds च. 18 पङ्क्त° B, C. 19 °य° J. 20 म is wanting in J 21 °ते C. 22 या is wanting in G1, G2, J. 23 हि J, K. 24 Wanting in J. 25 °भिनमसमा° G1 26 °यां G1; °यान्स G2; °याद् J. 27 द्वौ is wanting in J. 28 K adds सतामेष एव न्यायः । अथ युक्पर्यायाणां. 29 °मेव युजां C, G1, G2, J. 30 °मु° G1; °सु° J.

अथ युग्मन्तैः[1]।
द्विक[2]प्रभृतयः ष[3]डुत्तरा द्व्यधिशयाः।
चतुष्कप्रभृतयः षडुत्तरा एकाधिशया[4]ः।
षट्कप्रभृतयः षडुत्तराः समाः।
तेषां पर्यायकृतिर्व्याख्याता।
अथ[5] द्व[6]यानां विवेकः।
एकि[7]प्रभृतयश्चतुरुत्तराः कलिस्तोमा[8]ः।
त्रिकप्रभृतयश्चतुरुत्तरास्त्रेतास्तोमाः।
द्विकप्रभृतयश्चतुरुत्तरा द्वापरस्तोमाः।
चतुष्कप्रभृतयश्चतुरुत्तराः कृतस्तोमाः।
अथो[9]भयेषु समविषमाणां विवेकः।
एकिं[10]प्रभृतयो द्वादशोत्तरा एकाधिशयाः क[11]लिस्तोमाः।
पञ्चि[12]प्रभृतयो द्वादशोत्तरा द्व्यधिशयाः कलिस्तोमाः।
नव[13]कप्रभृतयो द्वादशोत्तराः समाः कलिस्तोमाः।
त्रिकप्रभृतयो द्वादशोत्तराः समास्त्रेता[14]स्तोमाः।
सप्तिप्रभृतयो द्वादशोत्तरा एकाधिशयास्त्रेतास्तोमाः।
एकादशि[15]प्रभृतयो[16] द्वादशोत्तरा द्व्यधिशयास्त्रेतास्तोमाः।
द्विकप्रभृतयो द्वादशोत्तरा द्व्यधिशया द्वा[17]परस्तोमाः।
षट्[18]कप्रभृतयो द्वा[19]दशोत्तराः समा द्वापरस्तोमाः।
दशिप्रभृतयो द्वादशोत्तरा एकाधिशया द्वापरस्तोमाः।
चतुष्कप्रभृतयो द्वादशोत्तरा एकाधिशयाः कृतस्तोमाः।
अष्टिप्रभृतयो द्वादशोत्तरा द्व्यधिशयाः कृतस्तोमाः।[20]
द्वादशि[21]प्रभृतयो द्वादशोत्तराः समाः कृतस्तोमाः।[20]
अथो[22]भयेषां तज्जातीयविवेकः।
एकिप्रभृतय[23]स्त्र्युत्तरा उभयेषामेकाधिशयाः। cp. LŚ. 6. 5. 17.

---

1 °ग्मान्तौ C, G1, G2, J, K. 2 ह्विकप्र° C, द्विजप्र° G1, G2, J, K. 3 G1 repeats षडुत्तरा ... तयः. 4 °या G1, G2 5 अथा G1, G2, J, K. 6 द्व is wanting in C, G1, G2, J, युजानां K 7 एक° B. 8 Wanting in G1 along with the next four sūtras. 9 अथ येषु C, अथा येषु G2, J, K. 10 J adds एक. 11 किलस्तो° C. 12 पञ्च° B. 13 त्रिवृत्प्र° C, G1, G2, J, K. 14 °त्रिता° C. °स्तोता° G1; °त्रेना J. 15 °श° B. 16 °यौ C. 17 द्वार° J. 18 षष्ठप्र° C. 19 द्वाश्योत्त° G1. 20 Wanting in J 21 °दश° C, J. 22 अथोऽन्य एषां C 23 °तयः त्रु B.

द्विक[1]प्रभृतय[2]स्त्र्युत्तरा उ[3]भयेषां द्व्यधिशयाः ।
[[4]त्रिकप्रभृतयस्त्र्युत्तरा उभयेषां[4] ] समाः ।
व्य[5]त्यासं वर्तन्ते[6] ॥ ९ ॥ cp. LŚ. 6. 5. 21.
अथ कतमे सप्तच्छन्दसां[7] स्तोमा इति ।
त्रिवृत्पञ्चदशः सप्तदश एक[8]विंशस्त्रिणवस्त्रयस्त्रिंश इति ।
अथ खल्वाह—"सानुष्टुप् चतुरुत्तराणि छन्दांस्यसृजत[9] । षडुत्तरान् स्तोमान् सप्त[10]दशः" इति[11] । PB. 10. 2. 4.
सप्तदशात् त्रिकमुद्धृत्य पुरस्तात् त्रिवृतो निदध्यात् ।
चतुर्दशा[12]तिशिष्यन्ते ताः पञ्चविंशे[13] उपदध्यात् ।
एवमेतान् षडुत्तरान् स्तुवते[14] ।
अथ[15] क[16]तमे भागस्तोमा इति ।
त्रिवृत्पञ्चदशः सप्तदश एकविंश इति ।
त्रिवृतः पर्थ्या[17]यां विवद[18]न्ते ।
उ[19]द्यति पथ्यां[20] मन्य इति गौतमः ।
सा हि प[21]थ्यां[22]स्थामे तिष्ठतीति ।
परिवर्तिनीमिति धान[23]ञ्जय्यः ।
ए[24]षा विष्टुती न्या[25]यतरेण कृता भवतीति ।
अथापि "अवपुंक[26]स्तु पर्जन्यो भवति" इति । PB. 2. 1. 4; *Agni.* LŚ. 6. 2. 6.
उद्य[27]त्यां निन्दामवादीदिति ।
अथ य[28]त्र सं[29]ह्रियमाणाः पर्याया यथास्थानं भवन्ति[30] ताम[31]विदुष्टपर्यायिस्याचक्षते ।

---

1 धिक० J, K. 2 ०योस्त्र्युत्तरा C. 3 उ is wanting in J. 4 Wanting in B. 5 घात्माः B. 6 ०ते C. 7 ०ंसो विंशः पंचसा इति । G1; ०ंसोमा J. 8 G2, K add विंशः पञ्च after एक. 9 ०सृ० J. 10 ०न्त C. 11 Wanting in B. 12 ०शानि शि० C; ०शातिथिशि० G1. 13 ०शसुप० K. 14 श्रुवे G1; तुवे G2. 15 Wanting in J, K. 16 कतमे J, K. 17 पथायं J. 18 ०दन C. 19 उघती C; उघंती G1, G2, J; उद्यतीं K. 20 ०थ्या C, J. 21 प is wanting in J. 22 ०थ्याः स्था० G1, G2. 23 धानंयस्य: G1, G2. 24 सा हि वि० C, G1, G2, J, K. 25 ०ष्टुति० B, K; ती is wanting in G1; ०त० G2. 26 ०कस्त्विति B; कस्तु G1; स्तु प is wanting in K. 27 उदत्यां B, K; उदित्यां C; उदम्यां G1. 28 Wanting in K. 29 संहृय० C. 30 भवति K. 31 Wanting in G2, J, K upto ०स्थानं in the next line.

अथ[1] यत्राऽयथास्थानं[2] तां[3] विदुष्टपर्यायेति ।

अथ यत्र समा आ[4]द्यन्ताः पर्यायाणां भवन्ति ताꣳ समां[5]त्समेत्याचक्षते ।

अथ यत्र[6] प्रत्यवरोहिणस्तां[7] भक्त्रान्यायं[8] इत्याचक्षते ।

प्रत्यवरूढपर्यायेति च ।

अथ यत्र संस्तुतस्य स्तोमस्य[9] भूयिष्ठं[10]भाग् भवति तां ब्रह्मायतनीये[11]त्याचक्षते । cp. LŚ. 6. 6. 4.

अथ यत्र मध्यमा तां क्षत्रायतनीयेति च, गर्भिणीति च । cp. LŚ. 6. 6. 8.

अथ यत्रोत्तमा तां विडायतनीयेति । cp. LŚ. 6. 6. 8.

स खलु पर्यायान्[12] संहरन् भक्त्रान्यायं विडायतनीयां[13]न्तप्रथमां पर्याय[14]विद्रोणमिति च[15] वर्जयन्[16] समांत्सं[17]मामेव चिकीर्षेत्[18] ॥ १० ॥

अथातो विधिशेषान् व्याख्यास्यामः ।

अनौप[19]वसथ्येऽहनि सं[20]मामनेरन् । cp LŚ. 2. 5. 28.

वागाप्यो[21]यिता प्रयुज्येतेति ।

अथैताः कुशा[22] उपकल्पयेत्[23], औदुम्[24]बरीर्वा पालाशीर्वा, यो वान्यो यज्ञियो वृक्षः ।

प्रादेशमात्रीः कुशपृष्ठास्त्वक्तैः[25] समा मं[26]ज्ञतोऽङ्गुष्ठपर्वपृथुमात्रीः प्रक्षाताग्राः का[27]रयित्वा गन्धैः प्रलिप्य[28] सर्पिषा सत्रेषु खादिरीस्तु[29] दीर्घसत्रेषु वैष्टुतेन वसनेन परिवेष्ट्यौदुम्बरीमध्ये[30] वासयेत्, क्षौमꣳ शाणं कार्पास[31]मिति वसनविकल्पाः । LŚ. 2. 6. 1.

---

1 अथ is wanting in C. 2 ०नां B. 3 तां is wanting in J, K; तान् G2. 4 स्वाचता C. 5 ०समासमि० C; समात्समि० B. 6 येत्र G1, G2, J. 7 ०णस्तं C, G1, G2, J; ०णतं K. 8 ०न्यायत G1, G2, J, K. 9 K adds प्रथमा. 10 ०ष्ठ प्रभा० G1, J. 11 ०नीयो० G1. 12 पर्यायां स० G1. 13 ०नीयाभिः प्रथमां C; ०नीयांनिः प्रथमां G1, G2, J, K. 14 वि is wanting in G1. 15 Wanting in C, G1, G2, J, K. 16 वर्ज्जयं G1. 17 समान्त्स० C, J; समांत्ससविमेव G1, समात्समेव G2. 18 ०र्षेदिति C, G1, G2 J, K. 19 अनोप० C; अभौप० J. 20 C, G1, G2 add न. 21 वागाप्यायिनी C. 22 कुशाशा B. 23 ०ल्पयते C, G1, G2, J, K. 24 अथापि मदु० G1, G2. 25 ०त्वच B; ०त्वक्ताः G1. 26 मज्ञातो० B. 27 कर० G1, G2, J. 28 ०प्य C; प्रक्षिप्य J. 29 ०री C, ०रीषु G1, G2; ०रीष्व J, K. 30 ०मध्यभिवा० C, K, मध्यविवा० G1, G2, J. 31 कर्प्यास० G1, G2, कार्प्यास० J.

औ[1]दुम्बरीमुद्धृ[2]त्य [न[3]] विसृजेत् । cp. LŚ. 1. 7. 6.

आच्छदिषो[4] व्यूहनाच्छ्लोभूत ए[5]नामूर्ध्वाग्रैः कुशैर्वेष्टयित्वैवंजातीयेनैवोर्ध्व[6]दशेन वर्सनेन प्रदक्षिणं परिवेष्ट्य च स्पृष्टोऽनपश्रि[7]तं उद्गायेत्[8] ।
ई[9]ति गौतमः । cp. LŚ. 2. 6. 2.

धिष्ण्[10]योऽयं भवति न धिष्ण्यमासादयेदिति । Agni. ibid.; cp. Dr. Ś. 5. 2. 7.

'धू[11]म्रमपश्रयेत' इति धानञ्जय्यः । LŚ. 2. 6. 3; Dr. Ś. 5. 2. 7.

श्र[12]यणार्थेयं भवतीति ।

सा य[13]दौदुम्बरी मङ्गलायैवोर्गु[14]क्ता ।

उदकसेवी बहुपलाशो नातीवाफलो भवतीति ।

प्राक्समासं वोद[15]क्समासं वोपरि[16]ष्टाद्दशमास्तीर्य प्रस्तोता वि[17]ष्टुतीर्विदध्यात् । cp. LŚ. 2. 6. 4; Dr. Ś. 5. 2. 9.

उद[18]गग्राभिः प्रथमं विष्टावं प्राक्सꣳस्थम् । cp. LŚ. 2. 6. 6.

प्रत्यक्सꣳस्थमित्येके ।

पश्चात् प्रथमस्य विष्टाव[19]स्य प्रागग्राभिरुदक्सꣳस्थं[20] द्वितीयम् ।

प्रत्यगग्राभिरित्येके । cp. LŚ. 2. 6. 7.

पश्चादेवं[21] मध्य[22]स्य विष्टावस्योदगग्राभिः प्रत्यक्सꣳस्थं तृतीयम् । cp. LŚ. 2. 6. 7.

एतया[23]वृता पर्यायान् विदध्याद् ।

दक्षिणार्ध्ये[24] प्रथममनुपूर्वमुदीचः सꣳहतान् विष्टावपर्यायान् विदध्यात् ।

इतरेतरेण[25] 'शिरसि कुशा न[26] विधीयेरन्नित्येके ।' cp. Ārṣ. K. V. 21. b.

पराक्त्वादावर्त्यङ्गभावात्तु[27] विधीयेरन् ।

एतेन[28] सन्धिरुक्तः ।

त्रिवृत उद्यत्या विधाने[29] विप्रतिपद्यन्ते[30] ।

---

1 अदु० G1. 2 ०मुच्छ्रित्य B. 3 Wanting in B. 4 ०षोऽध्यूहनाच्छ्लो० C, G1, G2, K; ०षोध्मूहनाछ्लो० J. 5 पनामूर्ध्वैः द्वां G1. 6 वसितेन B. 7 ०तं B; ०नपसृत C; ०नपश्रित G1, G2, J. 8 त् is wanting in G1, G2, J, K. 9 ई is wanting in G1, G2, J. 10 धिष्ण्यो० C. 11 इपश्चयोतति धा० J. 12 पशुषणार्थेयं C; अपश्रय० G1, G2, K; ज्यश्रय० J. 13 य औदु० C; ये दौदु० G1, G2, J. 14 ०वोर्गुक्ता B; ०वोर्मुक्त C; ०वोर्मुक्त G2, K ०वोमुक्त J. 15 वेद० G1. 16 ०रिदश० C, G1, G2, J, K. 17 ०ष्टुता० J. 18 उदसुग्राभिः G1; उदग्राभिः G2. 19 ०व० J. 20 स्थ is wanting in G1, J. 21 ०देवास्य C; पदेव० G1, G2, J; ०व K. 22 मध्यमस्य C, G1, G2, J. 23 ०या तदा J. 24 ०णार्धे C. 25 इतरेष्वितरेण C, इतरेण G1, G2, J but a second hand in G2 corrects it. 26 नु C. 27 ०भावा तु C, ०भावाधु G1. 28 तेन J. 29 विवाने B. 30 ०ते C.

यथैक[1]ः पर्याय इत्ये[2]के ।
तृचभागास्थानेषु पर्यायाणां पर्याया[3]ः स्युरित्येके ।
एतेनैवं[4]जातीया व्याख्याताः व्याख्याताः ॥ ११ ॥

तृतीयः पटलः[5]

अथातः स[6]मान्तानां चत्वारो भाग[7]सामान्ता[8]ः । cp. LŚ. 6. 9. 6, 7; Ārṣ. K. V. 15. a.
स्वरो निधनमिडा वाक् ।
तद्यानि स्वरा[9]ण्याग्नेयानि तानि गायत्रतया, वायव्यानि वा ।
यानि निधनं[10]वन्त्यैन्द्राणि तानि त्रैष्टुभतया ।
या[11]न्यैडानि वै[12]श्वदेवानि तानि जाग[13]ततया ।
यानि वाङ्[14]निधनानि प्राजापत्यानि तान्यानुष्टुभतया[15] ।
अत्र खल्वस्य सर्वस्[16]य छन्द[17]सो निधनार्[18]पेयमुक्तं भवति ।
अथेमौ[19] स्वरौ सन्तौ[20] निधनेषु समाम्नायेते[21] ईकारो[22]कारौ ।
कस्य हेतोरिति ।
यान्यन्यानि स्वराण्[23]यसिद्धोपायानि तानि भवन्ति ।
क्व एवं[24] तेषामध्यै[25]न्ववस्वरणं भवति[26] ।
अ[27]थेमौ सिद्धोपायौ भवतः—वागुपायाविति ।
अथाप्येनौ[28] निधनस्थानेषु युं[29]ज्येते ।
स्वरैश्च सन्निप[30]ततः ।
निधनवादश्चैनयोर्भवति[31] ।
"तं वैराजस्य निधने नादरहे[32]न्" इति । PB. 12. 10. 6.
अथाप्येनौ वाक्यविलो[33]पावाहुः ।
इहेति वेदमिति वा सं[34]तो विलुप्[35]त ईकारः ।

1 ०क G1, G2, J, K. 2 त्ये is wanting in B. 3 ०र्यायण्याः G1, G2, J. 4 ०वंतृतीया K; G1, G2 add न after व्या. 5 In B only. 6 समा० B. 7 भागः सा० G1, G2, भागाः समास्ताः C. 8 ०मामन्ताः B. 9 ०रागया J. 10 ०नत्यै० B 11 अन्यै० B. 12 विश्व० G1, G2. 13 जागनया B. 14 वाङ्धिनानि G1. 15 ०भनया G1, G2, J. 16 सर्वशरछ० C. 17 छन्दारो J. 18 निधर्पेय० J. 19 अथेमौ G1, G2, अर्थे मां J. 20 सन्तो G1, G2, J. 21 ते is wanting in B. 22 ई० C, G1, ईकारौ J 23 स्वा० G1, G2, K; स्वांराशयसि० J 24 एवे J K 25 तेषां मध्यं न्व० C, तेषा मध्यन्व० G1, G2. 26 भवद् J. 27 प्रथमो J. 28 B adds within brackets वाक्यविलोपावाहुरिहेति. 29 युज्यते B. 30 ०प० C 31 ०वती G1, G2, J. 32 इ is wanting in J. 33 ०लोपो० B C. 34 सदो C. 35 ०सं B.

ऊर्ध्वमिति वोपरीति[1] वा सतो[2] विलुप्त[3] ऊकारः[4] ।

तावप्य[5]नुनासिकौ[6] ब्रुवते[7] वाक्यविलोपत्वादेव ।

तद् यत्र यत्रैते सामान्ता भवन्ति[8] स्वरो[9] निधनमिडेति तदेनान्[10] प्रकृता इत्याचक्षते । cp. LŚ. 6. 9. 7.

अथ यत्र समानसामान्ते सन्निपततस्तज्जा[11]मीत्याचक्षते । cp. LŚ. 6. 9. 8; Ārṣ. K. V. 51. b.

अथ[12] यत्र समानपृष्ठे[13] अहनी समानभक्तिनी वा[14] तत्[15]खलु नानात्व[16]प्रक्रान्तेष्वेवाजामि भवति ।

अथ यत्र[17] यत्र समानमभ्यस्यते साम वाऽहर्वा[18] जाम्येव तद् भवति ।

सामान्याश्च सामान्तै[19]र्नानाहःसु[20] जामि भवति ॥ १२ ॥

अथैतान्यन्तरेण व्यवयन्त्यजामिकरणानि भवन्ति ।

सोमो वषट्कारः शस्त्रमवयवः[21] ।

अथ[22] यत्रान्तरेण सामानि क्रियन्ते[23], यथातिच्छन्दसं परिमाद इति, तत्तत्र ।

अथ यत्रैकमावर्तिस्थानं नानासा[24]मानि समवयन्ति[25], यथावृत[26] एकसाम्नः[27] स्थानमिति, तत्तत्र ।

अथ यत्र सामान्ता[28] व्यत्यस्यन्ते, यथा विश्वजिति[29], तत्तत्र ।

अथ यत्र समान[30]सामान्ते सन्निपततो मध्ये निधनेन तत्र ।

यत्रो मध्ये निधनेनान्ते[31] पृथगिति तत्तत्र ।

यत्रो न विद्यतेऽर्थः[32] सन्निपतति[33] तदर्थो[34] जामिकरेण[35] इति तत्तत्र ।

सर्वत्र रथन्तरसन्निपाते जामि भवति, तथा बृहत्सन्निपाते ।

तत्रैतान्यजामिकरणानि[36] ।

---

1 वा विपरीतिना स॰ C. 2 सदो C. 3 B repeats here ऊर्ध्वमिति वोपरीति. 4 वाकार: B. 5 ॰न्द॰ G1. 6 ॰सिका B; ॰सिक्यौ C. 7 ब्रुते G1, G2, J; ब्रूते K. 8 ॰नि J. 9 स्वारो G1, G2, J, K. 10 ॰तान् C, J. 11 ॰जामि J. 12 अथ यत्र wanting in C; यत्र वा स॰ G1, G2, J. 13 C adds वौ. 14 च C, G1; व G2, J. 15 तद् is wanting in C. 16 नाना च प्र॰ J, K. 17 Wanting in C; य G1, G2. 18 वाईवा J; वाईता K. 19 सामान्तैः न्वाम्याहस्य B; सामान्तैर्ना॰ C; सामन्तैर्ना॰ G1. 20 ॰नहःसंयु॰ C, G1, G2. 21 ॰यथवयव: G1, G2, J. 22 अयं K. 23 गो C; गीयन्ते G1, G2, J, K. 24 सामानि ··· स्थानमिति is omitted by G1. 25 स is wanting in J. 26 ॰मत C, G2, J, K. 27 ॰म्न C. 28 समासान्ता C, G2 ( G2 had originally सामान्ता ). 29 विति J, K. 30 सा॰ G1, G2, J. 31 ॰नात्रैः C. 32 ॰र्थान् B. 33 संनिपतति॰ G1, G2, J. 34 तमर्थो C. G1, G2, J, K. 35 ण is wanting in B. 36 ॰रण इति तत्तत्र सर्वत्र G1.

सौभरं मत्त्वयत्यो बृहदिति । cp. PB. 10. 4. 7, 8.

ऐषो[1]ऽभिव्याहारो वार्कजम्भं[2] बृहन्निधनं बृहन्निधनानीत्याह[3]—रथन्तरसन्निपातेषु "कण्वरथन्तर[4]मभिभवन्ति[5] रथन्तरणिधनानि[6] बृहत्[7]सन्निपातेषु।"
Ārṣ K. V. 88. b.

एतावता खल्व[8]जामि[9]कल्पँ समन्वीक्षेत।
तदस्ति स्वित्[10] साम्न[11]श्छन्दो देवता ३ नास्तीति ।
नास्तीति धानञ्जय्यः ।
किं[12] स्व[13]रस्य छन्दो भविष्यति का देवता ।
मिताक्षरो भवतीति ।
अस्तीति[14] गौतम[15]ः ।
यच्छन्द[16]स्कायामृचि गीयते तदस्य छन्दः ।
यद्देवत्या[17]यां सास्य देवता ।
तद्विजा[18]नीमो यत्[19] स्वयो[20]न्यसममुत्तरयोर्विकारं भवति ।
अथाप्याह[21]—"ऐन्द्र्य ऋच ऐन्द्रँ साम" इति[22] ॥ १३ ॥ PB. 8. 1. 7.

1 ओषाभिव्याहषो G1; ओषाभिव्याहतो G2, K; ओषाभिव्याहवे J. 2 Wanting in C. 3 ॰त्युक्तं C. 4 ॰तरभव॰ G1, G2, J; ॰तरं भव॰ K. 5 ॰वनि C, K. 6 ॰णिधानानि B. 7 कहस॰ G1. 8 खलु जा॰ B, C. 9 जाभि॰ C. 10 द् is wanting in G1, J; इति K. 11 साम्न छ॰ G1, G2, J. 12 वि २० G1. 13 ॰स्वं स्वरस्य B. 14 आभ्नतरगौतमौ । C; अस्तीन्यस्वयोति गौतमः G1. 15 ॰मा J. 16 ॰न्दस्सायाभृचि C, G1, G2, J, K. 17 ॰त्याय॰ G1. 18 ॰नीयो J, K. 19 य G1. 20 स्वयोन्यः स्वयोनिनापचिततरं C; स्वयोनिनायविततरं G1; स्वयोन्यस्वयोनिनापवितनरं G2, K; स्वयोनितापवितरं J. 21 ॰प्यह C. 22 C adds इजेति.

## अथ द्वितीयः प्रपाठकः[1]

ऋषिकृताः[2] स्विदूहा[3] ३ अनृषिकृता[4] इति[5] ।
[ अनृषिकृता[6] इति वै[7] खल्वाहुः ।
अप्याद्या[8] विरता एवोहनात् ।
नो एवमार्षेयो[9] भवति ।
अथाप्यूह इत्येने[10]माचक्षते ।
कर्तव्य इति[11] ] वैतद् भवति ।
अथापि याज्ञिका विप्रति[12]पद्यन्ते ।
यज्ञार्थः खलु पुन[13]रूहो[14] भवति ।
अथापि वृत्तियोनिरिति गायन्ति ।
किमु खलु स्मृतौ वृत्त्यां[15] किं योन्यां[16] भविष्यतीति ।
अथापि नौ[17]त्यन्तं गायन्ति[18] ।
तत्र यद्[19]गीतं कर्तव्यमित्ये[20]वापन्नं[21] भवति ।
अथाप्य[22]न्यसं[23]हितस्य संहितामवेक्ष्य[24] गायन्ति ।
तदेतत् स्मृतौ नोपपद्यते[25] इति ।
ऋषिकृत[26] इत्यपरम् ।

---

1 in C only. 2 ०कृत् C; ०कृतः G1, G2, K; ०कृत J. 3 स्वूहा C. 4 ०त C, K. 5 K has it struck off. 6 Wanting in B, C; K has it struck off. 7 इति वै खल्वाहुः ... कर्त्तव्य इति (line 6) is wanting in B. 8 अयद्या C; अप्यद्यां G1, G2, J. 9 यो is wanting in G1, G2. J, K. 10 ०वमा० C; ०नेमा० G1; ०नेनमा० J. ०त्येनेचमा० K. 11 इतीवै० C. 12 ०तिपिध्यपद्यन्ते B. 13 ह्नुन० J. 14 ०रंहो B. 15 ०त्यां C. 16 ०न्यां C. 17 वा० G1, J, K. 18 ०ति B. 19 यदनीनम् B; यद्गीतं G1, G2, J, K. 20 ०त्येतावा० G1, G2, J, K. 21 ०न्ना C. 22 ०थापन्नस० C; ०थाप्यन्नास० G1, G2, ०थापन्नं सं० J; ०थाप्यन्नस० K. 23 संहितस्य is wanting in J. 24 क्षवो C. 25 ०धे० C. 26 ०कृता is suggested.

कथ[1]मेवं[2] यद्धनार्षं[3] यज्ञे क्रियेत ।

अथापि[4] बृहदुत्तर[5]योर्नाभिपश्यामीति भरद्वाजः ।

तपोऽतप्यत रथन्तरमुत्तरयोरिति वसिष्ठः ।

विद्यमानस्यैवोह्यस्याभिवादो भ[6]वति ।

अथा[7]प्येते वासिष्ठं[8] भारद्वाजमित्याचक्षते ।

अथा[9]प्याचार्यस्मृतीनां वक्ता तमतिशङ्कमानः सर्वत्रैवाशङ्केत[10] ।

अथा[11]पि यो वि[12]प्रतिषेधा[13]दस्मृतं मन्येत, अपि नूनं[14] स[15] सर्व[16]मेवापि यज्ञमस्मृतं मन्येत ।

यज्ञे ह्य[16]पि विप्रतिषेधा[17] भवन्तीति ।

यद्वैतदप्या[18]द्या वि[19]रता एवोह्यनादिति[20], अगीतोह्यास्ते भवन्ति ।

अप्रमाणं[21]मु खल्वनधीया[22]नः ।

यद्वै[23]त[24]दूहं इत्ये[25]नमाचक्षत इति, भवन्त्ययथा[26]र्थ[27] नामधेयानि ।

यद्वैतद्याज्ञिका विप्रतिपद्यन्त इति, आचार्यकल्पेऽपि[28] याज्ञिका विप्रतिपद्यन्ते ।

स[29] एव विस्मृ[30]तः स्यात् ।

ब्राह्मणविप्रतिपत्त्या च यज्ञमप्य[31]स्मृतं मन्येत ।

यद्वैतद्वृत्ति[32]योनिरिति गायन्[33]तीति, छन्दस[34]स्य[35] पार्थिका वृत्ति[36]योनि कल्पन्ते ।

भवन्ति चा[37]पेत्य वृत्तियोनि[38]भ्यामाचार्यगीतानि ।

यथा पार्थलौशशार्गाणि ।

यद्वैतत्या[39]न्तं गायन्तीति, कल्पा अप्यन्त्यन्[40]ता भवन्ति ।

---

1 कुक॰ J. 2 ॰व C. 3 ॰र्षेयं G1, G2, J, K. 4 G1, G2, J, K add ता. 5 ॰रायो॰ G1. 6 भ is wanting in G1, G2. 7 अनेनैव C; अप्यन्ये G1, G2, K; अप्येन्ये J. 8 ॰ष्ठभर॰ C. 9 तथा॰ B 10 ॰ङ्केव C. 11 तथा॰ B. 12 ॰निप्र॰ C, विप्रा॰ G1, G2, J. 13 ॰दा॰ G1, ॰दस्नन्मत K. 14 ने सर्व॰ B. 15 ससर्वमे॰ C; ॰९सर्व॰ B. 16 त्वपि J. 17 ॰षिद्धा C, ॰षेध J. 18 ॰प्य॰ B, G1, G2, J, प्या is wanting in C. 19 ॰वि रता B, C; वितरता G1, G2, J. 20 ॰दीत्यतीतो॰ B. 21 ॰णं सु J, K. 22 ॰धीतानि G1, J, K. 23 ॰वै॰ B. 24 G1, G2, add न. 25 इत्यनेन॰ B. 26 यथात्थ J. 27 ॰त॰ J. 28 अपि is wanting in C. 29 एवमत्र तस्मायन्त्रिनस्यार्के। B. 30 स्तन G1, G2, J, K. 31 ॰मध॰ C; ॰मस्मृ॰ K. 32 र्यो is wanting in J. 33 ॰त्रीति C 34 छन्द॰ C, G1, G2, J, K. 35 सार्थौर्च्छका वृ॰ C, ॰स्याप्योत्थिका वृ॰ G1, G2, J, ॰स्यायोत्थिका वृ॰ K. 36 ॰र्योनी C; ॰यो यं ऩी G1, G2; ॰योनि J, K; ॰निरिनि is suggested. 37 वा॰ C; चाप्येत्य K. 38 ॰नितस्यामा॰ B, ॰निभ्यामाचा॰ C, निपेसाचा॰ G1; ॰नित्यामांचा॰ J. 39 ॰त्यं G1, G2, J, K. 40 अप्यन्त्यन्ता J, अप्यनन्त्या K.

यथाऽऽवापवानेकाहोः श्रीस्तोमा उत्तरा तैतिरनुब्राह्मणिनामिति । यद्वेतदन्यसꣳहितस्य सꣳहितामवेक्ष्य गायन्तीति, छन्दस्यपि वृत्तिज्ञोऽन्यसꣳहितस्य सꣳहितामवेक्ष्य गायेत्, न तावता छन्दोऽस्मृतं मन्येत । अथापि य उपवादादस्मृतं मन्येत, अपि नूनꣳ स सर्वामेवापि त्रयीविद्यामस्मृतां मन्येत, ताꣳ ह्यप्येक उपवदन्तीति ॥ १ ॥

एकर्चदष्टीनि खित् सामानि[1] तृचदष्टीनीति ।
एकर्चदष्टीनीति शाण्डिल्यायनः ।
तद्विजानीमः ।
छान्दसेनाध्यायेनैकर्चान् भूयिष्ठाꣳ[11] छन्दस्यधीमहे[12] ।
अथापि[13] नो यज्ञ उपदृष्टिः, [प्राह[14]]—यदत्र धृष्णोत्येकर्चान् कर्तुम् ।
अथाप्येकर्चैः स्तोमान् सम्मिमते[15] ।
एकर्चान् [ह[16]] वयमधीमहे[17] ।
नाध्वर्युर्बह्वृचा वा उत्तरेऽभिजानन्तीति[18] ।
तृचदष्टीनीति[19] धानञ्जय्यः ।
तद्विजानीमः ।
छान्दसेनैवाध्यायेनैकर्चानधीत्य तृचमुत्तमेमधीमहे[20] ।
निदर्शनार्थो वै स ह[22] भवति ।
एवमेवातः[23] प्रागिति[24] ।
अथापि नो[25] यज्ञ एवोपदृष्टिः, प्राह[26]—कामायैवात्रैकर्चान् करोति ।
अथापि न ऋचा[28] स्तोत्रीयाणि[29] प्राहुः ।
द्वितीयायां वा[30] तत् तृतीयायां वर्चि[31] लक्षणं भवति ।
यदार्षेयं तत् साम[32] भवति[33] ।

1 ॰ह B; ॰हः C, G1, G2. 2 तरति॰ C. 3 वृत्तोन्यसꣳ॰ G1; वृत्तिन्यो सꣳ॰ J. 4 गायेशोभ्रता॰ G1; गायेत्रेता॰ J, K. 5 ॰पा॰ B. 6 समर्चा॰ C. 7 C, G1, J, K add त्रꣳ. 8 स्त॰ J. 9 स्या॰ G1. 10 ॰नि तृ॰ B. 11 छाꣳ is wanting in J, K. 12 छान्दसस B: ॰छान्दसधी॰ K. 13 पापि K. 14 Wanting in B. 15 समिसते J. 16 Wanting in B. 17 तद्दे G1, G2, J. 18 Wanting in C, G1, G2, J, K. 19 ॰तीति C, J, K. 20 तृचमदष्टी C; तृचमदृष्टी G2, J, K but a second hand in G2 strikes off म. 21 ॰चमधी॰ G1, G2. 22 Wanting in C, G1, G2, J, K. 23 ॰ता J. 24 प्रणिति J. 25 ना C. 26 माहो C; मीहा G1; प्रहो G2, J but a second hand in G2 makes it प्रीहाः; प्राहा K. 27 काम एवा॰ C, G1, G2, J, K. 28 ॰चः C; C adds पूर्वा. 29 श्रोत्रि॰ G1, G2, J, K. 30 चाप तृ॰ C; वा तृ॰ G1. 31 ॰वर्च B. 32 ॰भान B. 33 ॰तीति C.

यथाऽऽकूपारमैषिरं पौरुहन्मनमिति ।

अथापि "छिन्नमिव वा एतद्यदेकर्चाः" इति ब्राह्मणवादः परिचष्टे । PB. 18. 8. 17.

अथापि जनुपैकैर्वौ नामाधीमहे तृचदर्शित्वादेव ।

अथाप्यधुनैव दैववाजेयैस्तृचापन्नं छन्दोऽनुजैगौ ।

उच्चावचदर्शीनीति शाण्डिल्यः ।

अप्यनूंचि, यथा दैवतानि ।

अप्येकार्धे, यथा सामोपेतानि ।

अप्येकंस्याम्, यथा भूयिष्ठानि ।

अपि द्वयोः, यथातीषङ्गाः ।

अपि तिसृषु, यथा सन्तंनीनि ।

अपि चतसृषु, यथेलान्दम् ।

अपि भूयसीषु, यथा पुरुषव्रतं कश्यपव्रतमादित्यव्रतमिति ।

अपित्वेतान्येके सामसूक्तानीत्याचक्षत इत्याचक्षत इति ॥ २ ॥

चतुर्थः पटलः

अथ द्वैयानि सामानीति प्रैतिदिशन्ति ।

यान्यपुरस्तात्स्तोभानि पदनिधनानि लघुगीतीनि[17] तानि राथन्तराणि ।

यानि पुरस्तात्स्तोभानि बहिर्निधनानि गुरुगीतीनि[18] तानि बार्हतानि ।

अथान्यतरतो रांथन्तराणि चान्यतरतो बार्हतानि च ।

---

1 पौराहंम० B; पौरहनानमिति G1, J, पौरहनानमिति G2. 2 ०वैकं० G1, G2, J. 3 दैववादेय० B; G1, G2, J omit दैव but a second hand in G2 adds it in the margin. 4 या० G1, G2, J, K. 5 ज is wanting in B. 6 उविच० C. 7 ०नूषिः C, J, K; ०नूष्वि G1. 8 साम्युपे० B; साम्यूते० G1, G2, J; साम्युपे० K. 9 अप्यासां J. 10 नीति C, G1, G2, J, K. 11 ष is wanting in G1, G2. 12 अपीत्येता० B; अपिवेता G1. 13 समेसू० G1, J, K. 14 च या० B. 15 प्रदि० C, G1, G2, J, K. 16 स्तात् wanting in G1; स्ता wanting in G2, J. 17 ०तीवि G1. 18 ०गीती G1, ०गीतीति उपान्तपञ्चम्यां पंक्तिर्पंचैकगलन्तं राथन्तराणि यानि गुरुगीतीनि बार्हतानीति J. ( see p. 26 note 21 ) The portion उपान्त ··· ··· बार्हतानीति is given by C within brackets as the reading of C ख. G2 has also the same reading but a second hand has struck it off and written तानि बार्हतानि ··· बार्हतानीति in the margins, ०गीतीनि पञ्चम्या पंक्ति पञ्चकं गलन्तं तानि राथन्तराणि यानि गुरुगीतीनि बार्हतानीति K. ( see p. 26 note. 21 ) Thus C ख, J, K omit here the following twelve sentences; C gives them within brackets as the reading of C क. 19 रथंतरा G1.

अपुरस्तात्स्तोभानि च बहिर्निधनानि च[1] ।
पुरस्तात्स्तोभानि च पदनिधनानि ।
[अथोभयतो बार्हतानि च ।][2]
अथोभयतो[3] राथन्तराणि चो[4]भयतो[5] बार्हतानि[6] ।[7]
अ[8]पुरस्तात्स्तोभानि[9] पदनिधनानि गुरुगीतीनि[10] ।
पुरस्ता[11]त्स्तोभानि बहिर्निधनानि लघुगीतानीति[12] ।
गीत्यैतानि विजिज्ञासेतेति[13] शाण्डिल्यायनः[14] ।
यानि लघुगीतीनि तानि[15] राथन्तराणि ।
यानि गुरुगीतीनि तानि[15] बार्हतानि[16] ।
अपि[17] वा[18] यानि[19] प्रण्यस्तगीतीनि तानि राथन्तराणि ।
यान्यु[20]दात्तगीतीनि तानि बार्हतानीति[21] ।
कल्पेनैव[22] यज्ञकामा[23] व्याख्याताः ।
यथैतत् स्वर्गकाम[24]यज्ञः पशुकाम[25]यज्ञः प्रजापतिकाम[25]यज्ञोऽभिचरणीय इति ।
अथाप्याहुः[26]—ऊर्ध्वार्थ एव खल्वयं भवति ।
तं[27] नु खल्वर्थं श्रेम्णो[28]ऽन्येऽर्था अन्ववयन्तीति[29] ।
आप्तकामाः[30] स्विद् देवाः[31] स्तूयन्ता३ अनाप्तकामा[32] इति ।
अनाप्तकामा इति वै खल्वाहुः ।
को ह्याप्तकामस्य स्तुत्या[33] कः प्रत्यर्थो[34] भवतीति[35] ।
अथाप्याहुः—श[illegible]श्वदनाप्तकामा एव भवन्ति ।
तत्प्रवादेन[36] जानीमः ।
यस्मै देवा कामयन्ते तस्मै समर्धयन्ति ।
कुतो[37]ऽनाप्तकामाः समर्धयिष्यन्तीति[38] ।
अथापीहैवं[39] पश्याम आप्तकाम[illegible]तराणामेवानाप्तकामैरिप्साम् ।

1 Wanting in B. 2 Want[illegible]ing in B, G1, G2. 3 ०भयतेति G1. 4 चोभयतो G1. 5 ०य तानि B. 6 G1, G[illegible]2 add च. 7 Wanting in C. 8 अ is wanting in C. 9 C, G1, G2 add च. 1[illegible]0 ०तानि G1. 11 स्तात् is wanting in G2. 12 गीतीनां G1, G2; C omits इति गीत्य[illegible]. 13 ति is wanting in B, G2. 14 ०नौ B. 15 तानि wanting in C. 16 नि स[illegible]nting in G1, G2. 17 Wanting in G1, G2. 18 C omits वा. 19 उदात्तगी[illegible] C क. 20 ०न्यनुदात्त० C क. 21 बार्हगीतीनि G1, G2 ( see p. 25 note 18 ). 22 [illegible] C ख, J, K resume from here. 23 ०काम्या G1, G2, J, K. 24 ०कामो० C. 25 प[illegible] is wanting in B. 26 अप्याहु० C. 27 तं नु is wanting in C. 28 श्रेयः प्रेम्णोऽन्ये[illegible]० B; श्रोमोन्ये० G1, G2; श्रोम्ना-न्ये० J, K. 29 ०वयंनीति G1. 30 ०कालमा० J, [illegible] K; 31 देवा श्रूयन्ता C. 32 ०नाप्त० J, K. 33 सुत्या C. 34 ०त्या० G1, G2, J, [illegible]K. 35 भविष्यतीनि C; भविष्य-तीति G1, G2, J, K. 36 ०प्रत्यवा० C. 37 कुतो C 3[illegible] 38 ०विष्यन्निति C, G1, G2, J, K. 39 ०हैव C, G1, G2, J, K. 40 [illegible]स० C, G1, G2, J, K.

यथैतद्वाङ्गामिति।

अथाप्यल्पका[1]मवदायाह—"विश्वेभ्यो देवेभ्यः स्वाहा" इति। VS. 22. 28; 39. 13.

कुतोऽना[2]प्तकामान् प्रतिव्यं[3]भविष्यदिति।

अथाप्याहुः—द्विस्थाना[4] देवा भवन्ति।

न्यूनम[5]न्यत्स्थानं सम्पूर्ण[6]मन्यत्।

यदु ह न्यूनं तदिह[7] यत्नैः[8] प्रतिविभवन्ति।

यदु सम्पूर्णं[9] तत आशिषः समर्धयन्तीति[10] ॥ ३ ॥

कथं[11] खल्वङ्गकामा इति।

विद्यन्त इत्येके।

श्रुतिप्रमाणाः।

अङ्गे श्रूयमाणं[12] कथं क्रतौ प्रतीया[13]मेति।

अथापि योऽङ्गकामं क्रतुकामं[14] म[15]न्येतापि नूनं[16] सोऽङ्गे दुष्टे सर्वमेवापि क्रतुं दुष्टं मन्येत।

अथा[17]पि पृष्ठहोमं सर्वेषां स्तोत्राणां मन्येतेति[18]।

क्रतुकाम इत्यपरम्।

क्रतुः खल्वधिकृतोऽङ्गैश्च कामैश्च भवति।

अथापि न आर्षेय[19]कल्पो दर्शयति—यज्जातीया प्रतिपद् भवति तज्जातीयानि द्रव्याणि कल्पयति।

यथा[20] ज्योगामयाविनो[21] वर्षकामस्य जन्या[22] गा विविरस[23]मानस्येति[24]।

अथापि योऽङ्गे[25] कामं मन्येतापि नूनं स तदेवाङ्गं कृत्वा विरमेत्, तस्मिन्[26] हि[26] सकामो भवतीति।

यद्वेतदङ्ग[27]दोषात् क्रतुदोष इति, विषये खलु दोषो भवति न तथाकामः।

यद्वेतत्पृष्ठहोमं सर्वेषां स्तोत्राणां मन्येतेति, भवन्ति[28] धाङ्गधर्मा यथा युग्य[29]स्य घासंदा[30]नमन्नस्योपाञ्जनमिति।

1 ॰कामपदाय B. 2 ॰नाप्त॰ G1, J, K 3 प्रतिभवि॰ C, J, K 4 ॰न B. 5 म is wanting in J. 6 पूर्वम॰ B. 7 ॰दितः C, G1, G2, J, K. 8 प्रयत्नैः B. 9 ततश्चाशिषः C. 10 ॰र्द्धतीति J. 11 कथमु C, G1, G2, K, अथमु J. 12 ॰मागां C. 13 प्रनियामेन G1, G2, J, K. 14 क्रतुं कामयेता॰ C. 15 म wanting in G1, J. 16 मन्येसो॰ G1, G2; मन्य॰सो॰ J, K. 17 अथोपि J. 18 मन्यन्त इति B. 19 ॰काल्पो G1, G2, ॰र्षकाल्पो J. 20 यथो G1, J. 21 ॰ने G1, G2, J, K. 22 जन्यामाविधित्समान॰ C. 23 विवत्स॰ B, विविमान॰ G1. 24 ॰न्य॰ K. 25 योग का॰ G1, G2, J, K 26 तन्हिस्मि G1, G2, J. 27 ॰दनदो॰ J, K. 28 ॰ति B. 29 ॰स्म॰ K. 30 चासा॰ B; दान्वासदाममक्षसो॰ G1.

सम्भूय तु खल्वर्थान् सा[1]धयन्तीति ।
कथमु ब्रह्मसाम्नि कामागानमिति ।
याथाकामी कामानामित्येक आहुः ।
अनादेशे किमन्यद् याथाकाम्यात् प्रतीयाम[2]ः ।
अथापि रहस्यब्राह्मणं[3] दर्शयति—याथाका[4]मीति याथाकामानामिति ।
क्रतुकाम इत्यपरम् ।
एषोऽधिकृतः ।
अथापि यः क्रतुकामेऽधिकृते सत्यं[5]न्यं काममुत्पादयेदपि नून स पशुना तृतीयसवने चर[6]न्तीत्यन्यं पशुमुत्पादयेत् ।
ओ[7]मिति सति समया[8]दपेयात् ।
यद्यु[9]पैतमेव प्रतीया[10]द्यः प्रातः[11]सवने सं[12]दृशं व्याहन्यात् ।
यद्वे[13]तदनादेश इति, आदेशजातिरेषा भवति ये[14]दधिकारः ।
यद्वेतद्रहस्यब्राह्मणं[15] दर्शयतीति, सर्वाभिप्राय एतदुपपद्यते ।
कथमु खल्वाशीःसमृद्धिरुपसं[16]रणानीति ।
सर्वस्तोत्रेष्वित्येक आहुः ।
स्तोत्र[17]शब्देन चा[18]भिश्रावयति ।
अपि चानिर्देशे किमर्थोऽवयवं प्रतीयादिति ।
ब्रह्मसाम्नीत्यपरम् ।
ब्रह्मसाम[19] ह्याशीःस्था[20]नमिति ।
अथापि यः स्तोत्रशब्दान्नो[21]ऽस्तोत्रीये प्रतीयादाशीश्शब्दादपि स नाऽब्रह्मसाम्नि प्रत्येतुमर्हतीति ॥ ४ ॥

अथातो यज्ञस्थानानि ।
अपिच सन्धियज्ञा इत्याचक्षते ।
अहोरात्राभीज्याऽग्निहोत्रम् ।

---

1 स्यादय° G1; सादय° G2, J, K. 2 °म C, G1, G2, J. 3 °णे C, G1, G2, J, K. 4 याथाकामिन्वविवका° G1, G2, K; याः थामित्वमिवका° J; °कामी कामा° is suggested here. 5 सत्यं न्यं G1, G2, J, K. 6 चरती° is suggested. 7 एदामि° B. 8 समानादपेयात् G1 G2; समानादयेयात् J. 9 °युवैत° C, G1, G2, J, K. 10 प्रतियाद्या: J. 11 प्रति° C; प्रते:° G2, J but a second hand in G2 corrects it. 12 स्व° B. 13 °देत्वद° G1; °देवद° J. 14 C adds तद्. 15 °णे C, G1, G2, J, K. 16 स wanting in K. 17 स्तोत्रे श° B; स्तोत्रब्देन J. 18 च न हि स्तावयति C; च हि श्रावस्तावायति G1, G2; च हि श्रावयति J, K. 19 °सामा G1. 20 °शीर्द्धान° C, G1, G2, J, K. 21 °ना-स्तोत्रे C; °न्ना स्तोत्रे G1, G2, J, K.

सायमाहुत्या रात्रिं[1]मभियजते।
सा यत्र क्व च पुरोदयाद्धू[2]यते स्वे स्थाने जुहोमीति विद्यात्।[3]
प्रातराहुत्याऽहः।
सा यत्र क्व च पुराऽस्तमयाद्धू[4]यते स्वे स्थाने जुहोमीति विद्यात्।
ते तु यदादौ निदधाति प्राप्तश्च होमकालः।
अपिचैवं[5] कृत्स्ने अहोरात्रे अभीष्टे भवत इति पूर्वपक्षापरपक्षाभीज्यौ[6]।
दर्शपूर्ण[7]मासौ।
पौर्णमासे[8]न हविषाऽपरपक्षमभियं[9]जते।
स यत्र क्व च पुराऽमावास्यं[10]या यजेत स्वे[11] स्थाने यजे[12] इति विद्यात्।[13]
आमावास्येन पूर्वपक्षम्।
स यत्र क्व च पुरा पौर्णमास्या यजेत स्वे स्थाने यज इति विद्यात्।
तौ[14] तु यदादौ निदधाति प्राप्तश्च य[15]ज्ञकालः।
अपिचैवं[16] कृत्स्नौ पक्षावभीष्टौ भवत इति क्र[17]त्वभीज्या।
चातुर्मास्यान्योपधि[18] भक्त्य[19]भीज्या।
आग्रयणेष्टी उदगयनदक्षिणायनयोः, पशु[20]सोमः, तस्य संवत्सरस्याभीज्या सुत्येति।
तत्खल्वेतत् सकृत्प्रयुक्तमाहिताग्नेः कुशलेन य[21]दग्निहोत्रं[22] दर्शपूर्णमासौ चातुर्मास्यान्याग्रयणेष्टी पशु[23]सोम इति[24] तु यदेवं न करोति ह्यवयज्यौ[25] स्यादिति।
[ अननुभूतिजः स्यादि[26]ति। ][27]

---

1 ॰त्रमभिजयते B; ॰त्रिमपि य॰ G1; ॰त्रिं यज॰ J, K. 2 ॰द्धूयेत C, G1, G2; द्धूयेत J, K. 3 J, K add स यत्र पुरामावास्यया यजत स्वे स्थाने यजत इति विद्यात् (See line 12). 4 ॰द्धूयेत C, G1, J, K. 5 ॰चैनं C. 6 C क reads ॰भीष्टा for ॰भीज्या here and in the following lines. 7 ॰पौर्ण॰ C, G1, G2, J, K. 8 ॰सेव G1. 9 ॰भिजयते B; ॰भियाजता J; ॰यजेते K. 10 ॰स्या C. 11 स्व G1, G2. 12 यजत C. 13 J, K omit this sûtra and the next two. 14 ते J. 15 होमकालः C क. 16 अपिवैवं C. 17 क्रत्वभीष्टा C; कत्वगभीज्या B. 18 ॰र्धि B. 19 कत्वगमीज्या B; पक्त्यमिज्या G1, G2. 20 पशुरसोमः B; पशुसमः C क; पशुसमः G1, G2, J, K. 21 यददग्नि॰ G1, G2, J. 22 ॰त्रपूर्ण॰ B. 23 पशुसोम इति तु is wanting in C क; पशुसोम इति वै सत्रं यदे॰ C ख; पशू (॰शुः॰ J; ॰शु॰ K) सोम इति वै स तु यदे॰ G1, G2, K. 24 J adds वै स. 25 ॰कायदिज्या॰ स्या॰C; ॰लायज्ञु॰ स्या॰ G1, G2, J, K. 26 स्योदि॰ J. 27 Wanting in B.

असिद्धि[1]दर्शी वा स्यात् ।

मूलि[2]पुरोडाशेनाप्नोति ।

आज्येन पयसा च प्राणिति[3] ।

अथाप्याहुः—आदित्यश्च वाव[4] खलु चन्द्रमाश्चे[5]मानि पर्वाणि कुर्वतो[6] ययोरियमभीज्या भवतीति[7] ।

अग्निहोत्रेणादित्य[8]स्येज्यामभियजते ।

दर्श[9]पूर्णमासाभ्यां चन्द्रमसः ।

तदग्निहोत्रं सायमाहुत्या प्रयुज्यते, प्रातराहुत्या निस्तिष्ठते ।

सोऽपि नाहुत्वा प्रातराहुतिमन्यं यज्ञमुपक्रमते ।

कथं पूर्वस्मिन्न नितिष्ठते[10]ऽन्यमुपक्रामेतेति[11] ।

पौर्णमासेन हविषा दर्शपूर्णमासौ प्रयुज्येते[12] ।

आमा[13]वास्येन निस्तिष्ठेते[14] ।

सोऽपि नानिष्ट्वा[15]ऽमावास्येन हविषाऽन्यं यज्ञमुपक्रमते ।

कथं पूर्वस्मिन्न नितिष्ठते[16]ऽन्यमुपक्रामेतेति[17] ॥ ५ ॥

तदप्यपरपक्षे प्रायणं परिजिहीर्षितं भवति । PS. 2.-7. 1.

रात्रौ वा । PS. 2. 7. 2.

यज्ञ[18]विलोपो विसंस्थिते[19] । PS. 2. 7. 3.

अपि च[20] नोह तमस एव तम ईयादिति[21] । cp. PS. 2. 7. 4.

तच्चेदपरपक्षे प्रायणं शङ्केत[22] । PS. 2. 7. 5.

यावत्[23]योऽपरपक्षस्या[24]तिशिष्टा[25] रात्रयः स्युस्तासां सायं प्रातराहुतीः प्रतिसङ्ख्याय हुत्वा[26] प्रत्याहृत्या[27]ऽमावास्येन[28] हविषेष्ट्वा समापयेयुः । ibid.

एवमर्थे[29]यज्ञविलोप इति ।[30]

पूर्वपक्षे चेद् रात्रौ प्रातराहुतिमेव । PS. 2. 7. 6.

---

1 सिद्धि० C, G1, G2; सिद्ध० J. 2 मूलः पु० B. 3 प्राप्नोति C, G1, G2, J; प्रणोति K. 4 वावस्व G1, G2; वांव स्व J, K. 5 ०मास्मिश्चे० C. 6 कुरुते G1, G2, J, K. 7 भोति G1, G2, J. 8 ०णाहादि B; ०णाहादि० G1, G2, K; ०णादादि J. 9 After सा both the mss. G1, G2 break off. 10 निष्ठिते० B, C; 11 क्रमेयेतेति B; ०मयेति J, K. 12 ०ज्यते J, K. 13 ममा B. 14 ०ते C, J, K. 15 ०निष्ठा० J. 16 ०न्ननिस्तिष्ठिते० B; ०न्ननिस्तिष्ठते० C; ०न्नमितिष्ठतेनिन्य० J. 17 ०क्रमेयेति B; ०क्रमयेति J, K. 18 ०विलोपो B; ०विमोदो J. 19 वि is wanting in J. 20 चान्यस्त० PS. 21 स्यात् PS. 22 शङ्केत PS. It does not end the sūtra here. 23 ०स्तापर० J. 24 ०क्षाति० PS. 25 ०ष्ट J. 26 ०त्वा J. 27 ०हु० J. 28 ०स्ये J. 29 एवं यज्ञ० C, J. 30 Wanting in PS. Hultzsch's ms. of PS. ( ie. H. PS. ) contains it.

पुरस्तादाहवनीयं[1] हरेयुः । PS. 2. 7. 7; cp. LŚ. 8. 8. 16.

पश्चाद् गार्हपत्यम् । PS. 2 7. 8; cp. LŚ. 8. 8. 16.

दक्षिणतो दक्षिणाग्निम् । ibid.

मध्ये शरीरम् । PS. 2. 7. 9.

तं दक्षिणाशिरसं[2] चितौवाहितं यज्ञपात्रैः कल्पयेत्[3] । PS. 2. 7. 10, 11; LŚ. 8. 8. 17. cp. ŚBr. 12. 5. 2. 7 up to p. 32. 4.

अध्वर्युः[4] शिरसि कपालानि युञ्ज्यात् । PS. 2. 7. 12; LŚ. 8. 8. 18.

समवत्तधानं[5] च चमसम् । PS. 2. 7. 13; cp. LŚ. 8. 8. 19.

ललाटे प्राशित्रहरणम् । PS. 2. 7. 14; LŚ. 8. 8. 20.

नासिकयोः स्रुवौ[6] कर्णयोर्वौ[7] । PS. 2. 7. 15; cp. LŚ. 8. 8. 21.

आस्ये हिरण्यमवधाया[9]ऽनुस्तरणिक्या[10] गोवपयो[11] मुखं प्रच्छाद्य तत्राग्निहोत्रहवणीं[12] तिरश्चीम् । PS. 2. 7. 16–18; LŚ. 8. 8. 22.

दक्षिणे पाणौ जुहूम् । PS. 2. 7. 19; LŚ. 8. 8. 23.

सव्य उपभृतम् । PS 2. 7. 20; LŚ. 8 8. 24.

पार्श्वयोः स्फ्योपवेषौ[13] ।[14] PS. 2. 7. 21; cp. LŚ. 8. 8. 25.

तथा वृक्यौ[15] यथास्वम्[16] । PS. 2. 7. 22; LŚ. 8. 8. 25.

उरसि ध्रुवाम् । PS. 2. 7. 23; LŚ. 8. 8. 26.

उदरे[17] पात्रीम् । PS. 2. 7. 24; LŚ. 8. 8 27.

उपस्थे कृष्णाजिनम् । PS. 2. 7. 25; LŚ. 8. 8. 28.

अन्तरेण[18] सक्थिनी[19] शम्यां[20] दृषदुपले[21] यच्च नादेक्ष्यामः[22] । PS. 2. 7. 26, 27; LŚ. 8. 3. 29.

दक्षिणस्योरुस्य दक्षिणत[23] उलूखलम् । PS. 2. 7. 28; LŚ. 8. 8. 30.

अनुसक्थि[24] मुसलम् । PS. 2. 7. 29; cp. LŚ. 8. 8. 31.

पादयोः[25] शकटशूर्पे[26] । PS. 2. 7. 30; cp. LŚ. 8. 8. 32.

---

1 PS. breaks the sūtra here. 2 चितायां वाहितं C, J, PS. 3 कल्पयति PS. 4 Wanting in LŚ 5 समन्न० C; समत्त० J; समोप्तधानं LŚ. 6 स्रुचौ C. 7 कर्णेवा J; wanting in LŚ. 8 ०र्० J, K. 9 PS. breaks the sūtra at ०धाय. 10 ०णे J. 11 गौमुखं वसया LŚ. 12 ०णि B. 13 स्फ्या० J; स्फो० K. 14 Wanting in LŚ. 15 वृक्कौ C; पक्कौ J, पृक्कौ K. 16 यथात्वम् J, wanting in LŚ. 17 उदस्थे J; उदरस्थे K. 18 अन्त्रेण J. 19 शक्थीनि J; सक्थो K; सक्थ्नी LŚ. 20 शम्या दृ० C शम्यादृ० J, K, PS. 21 H. PS adds च; PS, H. PS break the sūtra here. 22 नादेक्ष्यामः PS. 23 ०क्षिण B, J. 24 ०क्थं LŚ. 25 J repeats here the portion शम्या दृषदुपले ... पादयोः. 26 शंकुशूर्पे K. ०शूर्पौ H. PS; शूर्पम् LŚ.

सर्वाण्युत्तानान्यासेचनवन्ति[1] पृ[2]षदाज्येन पूरयित्वा । PS. 2. 7. 31, 32; cp. LŚ. 8. 8. 33.

अ[3]थैनं यथास्थानं युगपदग्निभिरुपसृजेत् । cp. PS. 2. 7. 33; LŚ. ibid.

सर्वस्वा[4]रिकं परिगा[5]णम् । PS. 2. 7. 34.

"स एष यज्ञायुधी यजमानः स्वर्गलोकमेति" इति ब्राह्मणं भवति[6] । PS. 2. 7. 35; ŚB. 12. 5. 2, 8.

"आहुतिं जुहोति पुत्रो भ्राता यो[7] वा[8]न्यो यज्ञियो ब्राह्मणः—
'तं[9]स्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनः ।'
'असौ स्वर्गाय लोकाय स्वाहा ॥'[10]" इति । PS. 2. 7. 36; ŚB. 12. 5. 2. 15.
शान्तिर्वामदेव्यम्"[11] ॥ ६ ॥ PS. 2. 7. 37.

पं[12]चमः पटलः

ए[13]कं हिङ्कारं बहिष्पवमानꣳ साम्नश्चैकत्वात् ।
छ[14]न्दसश्चेत्याचार्याः ।
साम्नामनु ना[15]नात्वम् ।
उत्तरयोः पवमानयोः पृथग्घिङ्कारा भवन्ति ।
पर्यायाणामनु ना[16]नात्वम् ।
आ[17]वर्तिषु सन्धौ विप्रतिपद्यन्ते ।
एकहिङ्कार इत्येके ।
यथा बहिष्पवमानं त्रिरात्वार्या हिङ्कुर्वन्ति ।
देवतानामनु नानात्वम् ।
विश्वजितोऽपि[18] वा[19] नानादेवतं बहिष्पवमानम् ।
अर्था[20]प्यत्र सकृद्धिङ्करोति सकृद्धिङ्कृतोत्पादत्वाद् बहिष्पवमानस्येत्याचार्याः ।
अथ यज्ञायज्ञीयानुरूपे कथꣳ हिङ्कार इति ।
यथोत्तरयोः पवमानयोरित्येके ।
अस्ति हि सामनानात्वम् ।
यथा वा विश्वजिति नानादेवतं[21] इति ।
सकृद्धिङ्करोति सकृद्धिङ्कृतोत्पा[22]दत्वाद् बहिष्पवमानस्य, तथा वा स्यादिति ।

1 ०ति न J, K. 2 पृजदा० PS. 3 अथैनान् PS. 4 सर्वास्वानिकं C; ०स्वारिकं J, ०स्वारं H. PS. 5 ०माणम् C; ०गणा० J; ०गानम् PS. 6 ति C. 7 ०तीति H. PS. 8 ०वो C. 9 यस्मो J; वा H. PS. 10 तस्मा० C, J, K. 11 C, J, K, PS, H. PS. repeat it 12 In B only. 13 एका J, K. 14 छा० B. 15 नात्व० J. 16 नात्व० B, J. 17 ०वर्त्ति C क. 18 ०तो वा C. J, K. 19 ना J; wanting in K. 20 अथात्र C, J, K. 21 ०ते सति । C, K. 22 ०त्पादाद B.

अथ योनौ यज्ञं तन्वानस्य[1] कथं[2] रेतस्या[3]रथन्तरवर्णे[4][5] स्यातामिति ।
उभे यथास्थानं स्यातामिति ।
बहिष्पवमाने चोत्पन्ने भवतः ।
न चापि[6] निर्वर्तयति ।
अथापि यथा गायत्रं यज्ञायज्ञीयधर्मान्[7] प्रतिपद्यते[8] एवमपि यज्ञायज्ञीयं गायत्रधर्मान् प्रतिपद्येत ।
बहिष्पवमान[9] एष धर्मो भवतीत्यपरम् ।
नान्यत्र[10] गायत्रान्न चान्यत्र बहिष्पवमानादिति ॥ ७ ॥
अथ[11] गायत्रस्य काम्याः सामान्ताः ।
यावन्निगदं स्युरित्येके ।
स्वरस्यैते[12] प्रत्याम्नाया भवन्ति ।
तत्र किमर्थोऽवयवं प्रतीयादिति ।
[ अथाप्येवमव्याहृतं[13] गायत्रं भवति ।
अथापि यथा[14] काम्यस्याविप्रयोगस्तत्कुशलम् ।
अथाप्येष प्रयोगाणां धर्मो येन प्रक्रमस्तेन[15] समाप्तिरिति ।
बहिष्पवमान इत्यपरम् ।
एतद् गायत्रस्य विकारस्थानम् ।
अथाप्येतद् धुरः[16] सामान्ता[17] नातियन्ति । ]
अथाप्येवमजामि भवति ।
अथाप्येवं यथाभूयिष्ठं भवतीति ।
प्रथमायामिति वार्षगण्यः[18] ।
एतद्बहिष्पवमानस्याशीःस्थानम्[19][20] ।
अत्र हि काम्याः प्रतिपदो भवन्तीति ।
रथन्तरवर्णायामित्यपरम् ।
एषा च विकृततमा ।
अपि च पथ्य[21]प्रक्रमं पथ्यावसानं भविष्यतीति ।
ब्राह्मण[22] आज्य इत्यपरम् ।

1 तत्वानानस्य J, K. 2 कथन्त C, J. 3 रेवर्णे J. 4 ॰र्ण॰ C. 5 ॰र्थर्णे B. 6 चातिनि॰ B; चापि निवर्त॰ C, J, K. 7 यज्ञीयं J. 8 पद्यत G1, G2. G1, G2 resume from here. (see p. 30 note 9). 9 C, G1, G2, J add गायत्रस्य. 10 वान्य॰ C. 11 Wanting in C, G1, J. 12 ॰स्येने C, G1, G2, J, K. 13 B omits the portion within brackets. 14 याथा॰ C. 15 प्रक्रमेरन् J, K. 16 धरा॰ G1. 17 ॰माना J, K. 18 वार्ष॰ G1. 19 एतत्पद॰ B. 20 ॰शीर्दानम् C, G1, G2, J, K. 21 पश्य॰ G1. 22 ब्रा॰ K.

ब्रह्मसाम ह्याशी[1]:स्थान[2]मिति ।

उत्तरयोः पवमानयोरित्यपरम् ।

एतद्वेतेषां[3] सामान्ताना[4] स्थानम् ।

अथाप्येवं रोहो भवति

अपि चान्ताख्यानि कर्माणीति ।

यद्वेतज्जामीत्यजामि वा कल्पयेत, अर्धो[5]ऽजामिकरण इति वापि तितिक्षेत ।

अनृच्ये[6]के गायत्रं गायन्ति ।

कस्य हेतोरिति[7] ।

स्वरायैतत् स्थानं कुर्वते ।

स न इत्थं केवलः स्वरो गीतो भविष्यतीति[8] ।

ते[9] व्याध्मत्यृचि प्रस्तुत्यानृचि गायन्ति[10] ।

प्रतिहारस्य चानुत्सादमनुपायांश्च[11] निधनस्य चानिधनस्वरितत्वान्निधन[12]-मुत्सीदेदित्याचार्याः[13] ॥ ८ ॥

अथ बृहद्रथन्तरयोर्वदति ।

तयोः समान[14] निधनमासीत् ।

तस्मिन्नातिष्ठेतामिति ।

किन्निधन[15]मिति ।

अहृ[16]रिति कौत्सः ।

अकारमेवान्यैत्[17] ।

सकारोपसृष्टं मेजे[18] ।

हकारम[19]न्यत् ।

सकारोपसृष्टं सकारमेव, अहमनयोः समानं निधनं मन्य इति धानञ्जय्यः ।

स हुभय[20]त्र दृश्यत इति ।

निधनब्राह्मणमेवाहमिदं मन्य इति वार्षगण्यः ।

द्वे खल्विमे पृष्ठे भवतः ।

एकं पृष्ठस्थानं तस्मिन्न स्पर्धेतो[21]महंपूर्वतया[22] इति ।

1 त्याशी॰ J. 2 ॰शीर्द्धा॰ C, G1, G2, J, K. 3 ॰देवेषा॰ K. 4 सामन्ता॰ G1, G2. 5 आमिकरण J; अर्ध्यो॰ K. 6 ॰नृचोके J. 7 इति is wanting in B. 8 ॰ष्यभीति G1, G2; ॰ष्यसीति J, K. 9 व्या घ नृचि B; तथा मक्षविम॰ C; ते ध्याध्मत्यृचं प्रस्तुत्यानृचि G1, G2; 10 गायन्तः C, G1, G2, J, K. 11 ॰याच K. 12 ॰स्वरत्वान्नि॰ B; ॰नं स्वरितत्वानि॰ C; ॰स्वरित्वान्नि॰ G1, G2; ॰न ''' स्वान् J. 13 ॰मुसीचदेदि॰ G1. 14 सामन् B. 15 ॰धा॰ B. 16 इ॰ C स, G1, G2, J; आइ॰ K. 17 ॰न्ये C, G1, G2, J, K. 18 C, J omit मेजे ''' सकारोपसृष्टं. 19 ॰भ्यास॰ G1, G2. 20 फभ॰ G1. 21 ॰र्दैयथामहं॰ G1, K; ॰र्दैधामहं॰ G2; ॰र्दैयथमहं॰ J. 22 ॰ताया G1, G2, J, K.

अथैतेषु पुरस्ताज्जपेषु वेति ।
एतदुद्[1]स्येदित्येक आहुः ।
एतानि मनसान्वीक्ष्योद्गायेदिति हि भवतीति ।
अन्यदिदं तेभ्यो भवतीति ।
यथाधीतमित्याचार्याः ।
न चोदासो विज्ञायते ।
अपि चार्थस्यादूपकम् ।
अथापि संशयेऽलोपो लोपान्[2]न्यायतर इति ।
ते[3] कथं पवमानगतयोरिति ।
कर्त[4]व्या इत्येके[5] ।
सामसंयुक्ता हि[5] भवन्ति[6] ।
अकर्तव्या इत्यपरम्[7] ।
स्थानसंयुक्ता हि भवन्ति ।
अथापि पवमानसा[8]म्नी [9]अप्रधानभूते भवत इति ।
अथापि यद्युहैनान् पुरस्तात् स्तोत्रा[10]दकरिष्यद् व्य[11]पेता अन्यैः सा[12]मभिरभविष्यन्, यद्[13]अनन्तरान् स्तोत्रव्यपा[14]योऽभवि[15]ष्यत् ।
एतेन वामदे[16]व्ययज्ञायज्ञीये व्याख्याते ।
बृहतः स्तोत्रोत्तमायां ब्राह्मणोक्तानां रोहाणामुत्तमं न रुह्यां[17]त् इत्याचार्याः ।
Ārṣ: K. V. 18. b; 19 a; 70 a.
अप्रथमा[18]यैवं ह्याह—बृहतो रोहा वृणीमहा मार्दा[19]यिषु वान्तौ पूर्वौ वृं[20]द्धौ निधनोपाये च द्वितीयमक्षरं वर्धयेत् स तृतीयः ।
तदुपरिष्टात् स्तोत्रस्य प्रत्यं[21]वरोहे देवं हि स युवानमृ[22]त्विजमनूचानं प्रेतमाहुः—ए[23]नमप्रत्य[24]वरूढं परावधीदिति ॥ ९ ॥
अथ यज्ञायज्ञीयै[25]स्योत्तरयोर्द्व्यक्षरेण प्रस्तौति ।

1 °स्येदि G1, G2, J, K. 2 लोपान्याय° G1, G2; लोपान्याय्य° K 3 Wanting in G1, G2, J, K. 4 °त्ये G1, G2. 5 Wanting in J, K. 6 °ति J. 7 म् is wanting in J, K. 8 °साम्नी B. 9 अ is wanting in C 10 स्तोद्गथवत्रा° J, K. 11 व्यवेता G1, G2, J, K. 12 °भे° J. 13 यद् द्यन° C; यद्यतंतरां G1, J यद्गथनतरां G1, G2, J, K. 14 °व्यवायो° C, G1, G2, J, K 15 °यो न भवि° G1, G2. 16 °देव्या° G1, वामदेवेनवामदे J. 17 रोहेद C, G1, G2, J, K. 18 अप्रमाधायै° B; अप्रमाधायै° G1, G2, J. 19 °मादा इषु वन्तौ B, मदाविषु° C, मदयिषु J. 20 वृ is wanting in G1. 21 वात्येव° G1, वाव° G2, मावराहे J. 22 °नमस्तृ B, 23 C, G1, G2, J add इहद्. 24 स is wanting in J. 25 °ज्ञीयोत्त° B; °ज्ञीयोस्योत्त° G1, G2, J.

यथा बृहद्रथन्तरयोः ।

तदपि शश्वद्ब्राह्मणं भवति—

तानि ह वैतानि द्वादशाक्षर[1]प्रस्तावानि ककुबुत्तराणि सामानि बृहद्रथन्तरे यज्ञायज्ञीयञ्चेति ।

अथ खल्वाह—"यदग्निष्टोमयाज्यनृतमाह, तदन्वस्य यज्ञः स्रवति, अक्षरेणान्ततः प्रतिष्ठाप्य[2]म्" इति । PB. 8. 6. 13.

किमनृतं किमक्षर[3]मिति ।

वेत्येतदक्षरम् ।

वकारादिराकारो गकारान्त इत्येक आहुः ।

तस्य गकारलोपं ब्राह्मणं क्षिपे[4]तीति तदर्पितमुपेयु[5]ः ।

एवं कृत्स्नेन "अक्षरेण यज्ञस्य छिद्रमपि दधाति" इति । PB. 8. 6. 13.

आर्चिकमेवैतदक्षरमित्यपरम् ।

एतस्मिन् ह्यक्षरशब्दात् प्रतियन्ति ।

अष्टाक्षरे[7]ण प्रथमाया ऋचः प्रस्तौति ।

द्व्य[8]क्षरेणोत्तरयोश्चतुरक्षरेण बृहतः प्रतिहरतीति ।

न स्तौभिकैः सहोपपद्यते ।

तस्माद्यदे[9]वान्त्यमक्षरं तन्निधनमुपेयुः ।

यथाधीतमित्याचार्याः ।

स्वरतन्त्राण्यक्षराणि भवन्ति, स्वरान्ततामेवाक्षरस्[10]यैप्सद् ब्राह्मणमेवमवक्ष्य[11]दिति ।

अथापि बहुलैषा छान्द[12]सी वृत्तिः ।

यौ[13]ङ्निधनानीति चैतान्याचक्षते, वागुपा[14]यानीति च ।

यद्ध्येतदार्चिकमक्षरमिति, यथाधिकारमेतद् भवति, स्तौभिकस्ये[15]द्धाधिकारो विज्ञायते ।

अ[16]थापि संशये प्रकृतिसविधमेव प्रत्येतव्यमिति प्रत्येतव्यमिति ॥ १० ॥

षष्ठ[17]ः पटलः

1 ०रा प्र० G1. 2 प्य is wanting in J, K. 3 ०रा० G1, G2. 4 क्षीयतीति B. 5 ०मुपपे० B. 6 G1 repeats here यज्ञस्य ... ०तस्मि ( lines 11-13 ) within brackets. 7 तृ J. 8 प्रद्व० J 9 ०देदान्त्य० J. 10 ०स्ये० K. 11 ०क्ष० G1, G2. 12 ०सि B; छ० J. 13 J adds नि. 14 ०पा० G1, K. 15 ०स्येद्धवि० G1, G2, J, K. 16 तथा० B. 17 In B only.

अथ द्रव्यसमुद्देशः ।

राथन्तराणि रथन्तरपृष्ठेऽभिरूपाणि, बार्हतानि[1] बृहत्पृष्ठे[2], उभयविधान्यु[3]भयसाम्नि । cp. PB. 8. 3. 7; Caland ibid.

द्रवदि[4]डानि रथन्तरपृष्ठे, ऊर्ध्वे[5]डानि बृहत्पृष्ठे । cp. PB. 10. 12. 4.

अथ यत्र रथन्तरपृष्ठे बार्हतानि क्रियेरन् बृ[6]हदीप्सया तानि[7] विद्यात् । cp. PB. 8. 3. 7; Say. ibid.

एवमेव बृहत्पृष्ठे[8] राथन्तराणि स्वयोनीनि[9] सर्वत्राभिरूपतराणि ।

अस्वयोनिभ्यः सामान्या ऋचा[10]म्, असामान्याभ्यश्छन्दां[11]सि प्रथमाः सामा[12]न्या इत्याचक्षते ।

अथ या[13] यज्ञप्रवादा[14]: [सत्रप्रवादाः][15] क्रतुप्रवादाः स्तोमप्रवादाः सर्वत्र[16] ता अभिरूपाः ।

शुक्रवत्यो[17]ऽप्रवादाः पूर्वयोः[18] पवमानयोः ।

होतृप्रवादे हविष्प्रवादे समिद्धवद्धोतुराज्यम् ।

हुतवन्ति पीतव[19]न्ति तृप्तवन्त्युत्तराणि ।

मरुत्व[20]त्यो[21]ऽग्निप्रवादाः कृ[22]तवत्यो माध्यन्दिनीयाः ।

परिवत्यः कोश[23]वत्यो निषण्णवत्यो माध्य[24]न्दिनीयाः ।

गायत्र्यां[25] वा त[26]त् त्रिष्टुभि वा मरुत्व[27]च्चिकीर्षितं भवति ।

अथ खल्वाह—"त्रीणि सवनानां छिद्राणि, तानि तेनापिधीयन्ते" इति । PB. 7. 3. 19.

"कतमानि छिद्राणीति ।

प[28]वमाना अदेवतास्तुतय[29]:, तानि छिद्राणीति ।

अथाप्यन्तरेण पवमानांश्चावर्त्तीनि च हविर्भिः प्रचरन्ति[30]; तानि छिद्राणीति ।" cp. Say. PB. 7. 3. 19; Caland ibid.

1 बार्हत्स्॰ G1. 2 ॰ष्ठेषु C. 3 ॰धाबु॰ C. 4 द्रवद्दानि B; प्रवदितानि C; द्रन्यदिडानि J, K. 5 ह is wanting in B. 6 ताभि G1, G2, J. 7 ॰ष्ठेन C. 8 नीति G1, G2, J, K. 9 सामन्याक्रं C, सामन्या J, K. 10 ऋचासोमेमन्या॰ G1; ऋचामसामन्या॰ G2, ऋचसामान्या॰ J; ऋचमसामन्या॰ K. 11 ॰श्छान्दसी C, G2, J, K, ॰श्छन्दसी G1. 12 सामन्या C; समन्या J, K. 13 वा B. 14 दात् B. 15 Wanting in B, K. 16 सर्वत्राभि॰ B. 17 ॰स्तोजः प्र॰ B. 18 B adds क्षतकत्यो. 19 Wanting in J. 20 त्व is wanting in G1, G2, K; ॰मरुयोत्यो॰ J. 21 ॰त्यो ष्प्र॰ C, G1, G2, J. 22 ऋत॰ C, G1, G2. 23 कोश॰ G1, G2, K; केश॰ J. 24 मध्यन्दिनान्तयाः B; माध्यदिनातीया G1, G2; मार्ध्यदिनांनीयान्व J, K. 25 य is wanting in G1, G2, J. 26 तस्रि॰ C. 27 त्व is wanting in G1. 28 पवमाना ... प्रचरन्ति wanting in J. 29 ॰याः C, G1, G2, J, K. 30 S has ॰नमावृत्तीनि.

वामदेव्यं[1] मैत्रावरुणसाम[2] सर्वत्राभिरूपम्, तदपचारे तल्लिङ्गीयांश्चिकीर्षेत् ।
अथैतानि तार्तीयसवनिकानि[3] रूपाणि ।
स्वादुमत्यो मधुमत्यो[4] भद्रवत्य ओजस्वत्यो विश्ववत्यश्चित्रवत्यः सूर्यवत्यो[5] दक्षिणवत्यो[6] निहूतवच्च वृद्धवच्चोक्थ्येषु ।
अथ नार्मेधस्तोत्रीये[7] वदति—
"ककुप् प्रथमाथोष्णिगथ[8] पुरउष्णिगनुष्टुप्" इति । PB. 8. 8. 26.
ककुबेव[9] प्रथमा, उष्णिग् द्वितीया, "पुरउष्णिक् तृतीया, दाशतयेनाध्यायेन[10] तां बह्वृचा अधीयते—*Sāy. ibid.*
'युञ्जन्ति हरी इषिरस्य गाथयोरौ रथ उरुयुगे । इन्द्रवाहा वचोयुजा ॥' इति । *RV. 8. 98. 9; SV. 2. 62.*
तत्र वयं[11] चत्वार्युत्तराण्युपाहरामः 'स्वर्विदा'[12] इति ।
सानुष्टुब्[13] भवति उपरिष्टाज्ज्योतिः" ॥ ११ ॥ Caland quotes l.5-13 on PB. 8. 8. 26.

कथमु षोडशी ज्योतिष्टोम इति ।
अकर्तव्य इति शौचिवृक्षिः ।
अन्तरितो[14] ब्राह्मणसमाम्नायेन[15], [16]तथा ऋक्समाम्नायेनेति ।
कर्तव्य इति गौतमः ।
षोडशिनः स्तोत्रे "[17]देयेति[18] भवतीति ।
अथापि न आर्षेयकल्पो दर्शयति[19]—
"द्वादशाहस्य[20] षोडशिमन्तावतिरात्रौ[21]" इति । Ārṣ. IX. 1. a.
अथापि मन्त्रवर्णो भवति[22]—
"त्रीणि ज्योतींष्यपि सचते स षोडशी" इति । PB. 12. 13. 32.
त्रिरुपेतो[23] द्वादशाहो[24] भवतीति चैतद् भवति ।

---

1 ०व्यमै० B, J. 2 ०वा० C, G1, G2, J, K. 3 तात्रीयवसवनिका G1; तार्त्रीयवसवनिका G2; तार्तीयवसवनिका J; नि is wanting in K. 4 मध्वस्वत्यो वि० C, मधत्योधस्वत्येत्यो वि० G1, G2; मध्वत्यो वि० J, K. 5 ०त्या J. 6 दक्षिणतात्यो निहूत० B; दक्षिणवद् योनिहूत० C. 7 वधे wanting in J. 8 ०मा यो० C, G1, G2, J. 9 क वे B. 10 दाशतय्यान्तां S. 11 ववायु० J. 12 सुवर्विदां B, स्वञ्चिदा S. 13 स्वता S. 14 ०रिते C, G1, G2, J, K. 15 ०येनेति C. 16 तथा ऋक्समाम्नायेनेति wanting in C; त समा० G1, G2; तत्समा० J, K. 17 दे० G1, G2. 18 C, G1, G2, J, K add दि. 19 ०यतीति B. 20 ०शान्तस्य B; ०शाहात्य G1, G2; ०शाहत J. K. 21 ०न्तवेतिरात्रौविति G1, G2, J. 22 G1 adds व. 23 ०पेते B. 24 ०हे B, G1, G2, J, K.

संस्थाम[1]प्यस्यैतां विद्यमानो[2]ममन्यत इति गौतमः ।
एवं च रहस्यब्राह्मणे दर्शयति—अप्यं[3]नेन षोडशिसंस्थेन यजेतेति ।
नो[4]र्हास्यैषा संस्था विद्यत इति शाण्डिल्यः ।
अतिरात्रे तु कृ[5]ताकृतो भवति ।
एवमिवाध्वर्युब्राह्मणं भवति—नो[6]थ्ये ग्राह्यो ना[7]तिरात्रे[8] ग्राह्य इति ।
सन्धी[9] इमौ भवत इति धानञ्जय्यः ।
उदयसन्धिरसा[10]वस्तमयसन्धिरयम्[11] । Ars. K. V. 22 b.
त[12]स्माद्यः कश्चातिरात्रः षोडशिमा[13]नेव[14] स कुर्शले[15]नेति ।
"तस्यैता ऋचः पञ्चविंशत्यक्षराः पञ्चपदाः पञ्चाक्षरपादाः ।
नवोपसर्गाक्षराणि[16], आदितस्त्रयाणां पादानां त्रीणि त्रीण्युपसर्गाक्षराणि पादा[17]न्तेषु भवन्ति ।
तेऽष्टाक्षराः सम्पद्यन्ते ।
पञ्चाक्षरावुत्तरौ, द[18]शाक्षरोपयुक्ताश्चतुस्त्रिंशदक्षराः सम्पद्यन्ते ।" Say. PB. 12. 13. 22.
अन्त[19]स्थास्तदुपसृष्टाः ।
केनो विद्या[20]मेति ।
इत्थं ह्येवं[21] वयमधीमहे ।
तथा बह्वृचा इति ब्राह्मणेनेत्याहुः—"चतुस्त्रिंशदक्षराः संस्तु[22]तो भवति" इति । PB. 12. 13. 24.
अनुप[23]सृष्टः कनीयानिति वैतद् भवति ।
अथाप्यु[24]द्ध्रियमा[25]णेषूपसर्गाक्षरेषु नैवार्थो हीयते, न वृ[26]त्तिर्दुष्यति ।
अथापि शश्वदेना अनुपसृष्टा आथर्वणिका अधीयते[27] ।
अथापि निर्धारितानामुपसर्गाक्षराणां वदति ।

---

1 म is wanting in G1, G2, J. 2 ॰नां मन्य C, G1, G2, J, K. 3 अथ देन C. 4 ना॰ C, G1, G2, J, K. 5 क्रता॰ G1, G2, J but G2 strikes off क्र and writes कृ above it. 6 ॰क्थ्यो C ख, G2, J; नोष॰ C क; ॰क्थ्योष G1; G1 adds (नाहास्यैषा संस्था विद्यत इति शाण्डिल्योऽतिरात्रे तु). 7 ऽति॰ C, G1, G2, J, K. 8 J repeats ग्राह्यो ऽतिरात्रे. 9 सन्धि B. 10 ॰म॰ B. 11 ॰रपि C; ॰रये J. 12 एत॰ C. 13 ॰शिनमा॰ G1, G2, K. 14 ॰ने J, K. 15 ॰न्येति॰ B. 16 ॰राश्च C; 17 पदा॰ B. 18 दशाक्षरावेकस्त्वाश्च॰ C, दशाक्षरोवैकस्ताश्च॰ G1, G2, J, K, S. 19 न स्था उप॰ C; अतस्था उप॰ G1, J. 20 विद्या मे तीर्थं॰ C, G1, G2, J. 21 ह्येनमधीमहे । J, ॰ह्येतवमहीमहे । K. 22 ॰स्क्रतो B; ॰स्तुतो G1, G2, J. 23 ॰क॰ G1, J. 24 ॰प्युभी॰ C. 25 य is wanting in J, K. 26 ॰व्यतिदु॰ G1, G2, J. 27 ॰न्ते G2.

"अथवा एता एकपदास्त्र्यक्षरा विष्णोश्छन्दो भुरिजः शाक्वर्यः" इति। PB. 12. 13. 22.

त्र्यक्षराण्यपि भुरिजो भवन्तीति।

तत्रैतद् गौरीवितं गायत्रीसाम, आनुष्टुभम्, रात्र्या समानभागः समानभक्षो भवतीति।

स यद् "गौरीवितं गौरीवित्य ईमा ऋचः स्वयोनि" कुर्वते।

ऋपिः स्वयोनिर्भविष्यतीति"।

एतेन सौभरनार्मेधे व्याख्याते, रैवती च वारवन्तीयम् ॥ १२ ॥

ज्योतिष्टोमात्पादमेके षोडशिनं ब्रुवते।

तत्र चास्य ब्राह्मणमधीयते।

अथापि कथमेवं कृत्स्नं कर्माकृतैर्मन्तरयिष्यदिति।

"चतुर्थोत्पादं वयं तत्र चास्य ब्राह्मणमधीमहे।" Ārṣ. K. V. 20 b.

अथाप्याह—एकविंशायतनो वा एव यत् षोडशीति।

तदेकविंशमहर्भवति।

अथाप्याह—दाशतय्य ऋचश्चतुरुत्तरंच्छन्दः, क्रमे वा एवंविधमुत्पद्यते न प्रथमकृताविति।

अह्नो भवतीऽ३ रात्रेरिति।

अह्नो भवतीत्याहुः।

अभुज्यं चास्य हविर्भवति।

अथापि नियुक्तधर्मा भवति"।

विद्धांश्छिल्पवान् मेहवान्।

यथाहरेवं रात्रेरित्यपरम्।

रात्र्या समानभागः समानभक्षो भवतीति।

---

1 उप वा K. 2 ॰पा॰ B. 3 ॰रा अक्ष॰ G1, G2. 4 भूरितः G1; भू॰ G2, J. 5 ॰रा अपि C, G1, G2, J, K. 6 B here reads एतेन सौभरना··· 7 ॰सामान्या B; सामान्यासानु॰ C, G1, G2, J. 8 Wanting in C; गौरि॰ B; ॰वतं G1. 9 मा G1, G2, J. 10 ॰चोऽस्व॰ C, G1, G2, J, K. 11 ॰योन्युस्त B. योनि कु॰ G1, G2, J, K. 12 ॰ती॰ C. 13 ॰मेव C, J; ॰मैक G1. 14 ॰तमिनिरे- ष्यिदिति B. 15 अथाप्या G1, G2, J, K. 16 ऋचो चा॰ C, G1, G2, J, K. 17 ॰रं C, G1, G2, J, K. 18 ॰त्या B. 19 ॰वति B. 20 भवर्जं C, G2, J; भवर्ज्ञ G1. A second hand in G2 strikes off व; भवर्वर्जं K. 21 ॰ती G1, G2 but the latter corrects it; ॰तीति J, K. 22 निवद्धान्छि॰ C; निविद्धान्छि॰ G1, G2. 23 गृह॰ B. 24 ॰राम् G1, G2, J, K. 25 B repeats it.

तौ खल्विमौ द्वौ सन्धी भवतः।
तयोरसौ नित्यः कृतां[1]कृतोऽयम्।
क[2]स्य हेतोरिति।
सार्द्धं[3] तेन रात्रिः[4] पञ्चदशविधतां लभते।
कृतं पञ्चदशविधमहरिति।
अथापि न तमुद्धृत्य पराक् स्तोत्रं रात्र्या[5]वलप्स्यत।
कृतान्यत्र्या[6]वर्तीनि।[7]
अथापि न तमुद्धृत्य तद्देवत्यं[8] स्तोत्रं रात्र्या[9]वलप्स्यन।
कृतान्य[10]ऐन्द्राणि।
अथापि विद्यते तस्य कालस्य स्तुतिर्नास्य विद्यते।
[कस्मात्[11] तस्य न विद्यते।][12]
पराङेतस्यां[13] वेलायामादित्यो भवति, नो परा[14] च स्तुतिर्विद्यते।
उदाहरन्ति द्वे[15] च परां[16] च स्तुतिम्।
हिरण्यस्तूपे[17] भवति—
'अस्यादेवैः[18] प्रतिदोषं गृणानः' इति। RV. 1. 35. 10.
"अथ खल्वाह[19]—'शक्करीषु षोडशिना स्तुवीत' इति। PB. 12 13. 13; LŚ. 10. 2. 1.
तत्रैके महानाम्नीः[20] प्रतियन्ति[21]।
एताः शक्कर्यो भवन्तीति।
एतास्वेव शक्करीप्रवादो भवतीत्यपरम्।
एताश्चाधिकृता भवन्तीति।" cp. Caland PB. 12. 13. 13.
ओङ्कारो विशेषश्रुतेः[22] सर्वसामस्तु[23] स्यादित्येके।
स वाचा रथन्तरे[24] निवर्तेत।
यथा त्रै[25]यस्त्रिंशं[26] तृ[27]तीयसवनमिति।

---

1 कृतोकृतः J. 2 करस्य J. 3 सार्ध्वं B; रार्द्ध J. 4 रात्रि J. 5 ०त्र्या० G1, G2, J. 6 ०त्रावर्तिनि B; ०त्रावर्त्तीनि G1; ०शवर्त्तीनि G2, J. 7 Wanting in C along with the next line. 8 ०वत्यासु G1, G2, J, K. 9 ०त्र्या० G1, J. 10 ०न्या० J. 11 ०तु C. 12 Wanting in B. 13 परोहे० G1; परांदे० J, K; परोद्दे० G2. 14 पचरा B; G1, G2, J read पराव for परा च. 15 C, G1, G2, K read त्वेव for द्वे च; त्ये J. 16 ०रा च स्तुति B; पराबस्तु० G1, G2; वशवस्तु० J; पराव: स्तु० K. 17 ०स्तवे B. 18 ०देवः C. 19 ०स्वाद G1, G2, J but a second hand in G2 has changed द into ह. 20 ०नाम्निः B; ०नाम्नी G1, J, K. 21 प्रवि० G1, G2, J. 22 ०षः श्रुतः C; ०षश्रुतः J. 23 ०सामं सं B. 24 ०रेण C; ०रा G2; ०रो J. 25 त्रय-स्त्रिंशत्० G1, G2, J; त्र त्रय० K. 26 ०शे G2, J, K. 27 त्रयस्त्रिंशत०B, G1.

[1]अभिपरीत्य प्रत्यप[2]क[3]र्षस्ता[4]द्दशमेतद् भवतीति ।
समुच्चयो वा[5]नन्यार्थत्वात् ।
प्रस्तावशान्त्य[6]र्था हि वाक् ।
उद्गीथादि[7]शान्त्यर्थ ओङ्कारः ।
वाक्पूर्वा[8] सामा[9]न्यात् ।
एवं यथान्तरप्रत्यासत्तिः ।
उत्तरां[10] वा[11]क् सा[12]मान्यविधेराचाराच्च ॥ १२ ॥

---

1 अहरत्यस्तोमस्यन्त्याभिपरित्य B. 2 प is wanting in B. 3 ०र्षस्ता० C. 4 ०वति C, G1, G2, J, K. 5 वा नानार्थ० G1, G2, J, K. 6 ०शान्तर्था G1, G2; ०शान्ततर्था J. 7 ०थादे० G1, G3. 8 वाक् पू० C; वाक्पुपूर्वं G1, G2, K; स्युपूर्वं J. 9 स्याद् C, G1, G2, J, K. 10 उत्तरी G1, G2, J. 11 वा C, G1, G2, J, K. 12 जघन्य० C, G1, G2, J, K.

# अथ तृतीयः प्रपाठकः

अथ का प्रथमा सꣳस्थेति ।
आग्निष्टोमीं[1] प्रथमां मन्य इति शाण्डिल्यः ।
प्रथमं[2] ह्येव स्थानं भवति ।
अथापि प्रथममधीमहे[3] ।
अथाप्यग्रमु[4]मुखानि भूतानि भवन्त्यपरो[5]वरीयाꣳ[6]सि ।
अथाप्याह—"यज्ञमुखं वा अग्निष्टोमः" इति ।
अथाप्येतया सꣳस्थया चरति ।
अथाप्येषा समा[7]रब्धतमा[8] ह[9] भव[10]तीति[11] ।
अथापि नाग्निष्टोममकृत्वाप[12]रे सꣳस्थे[13] करोति ।
नह्यनुपादाय प्रथमामुत्तरयोः सिद्धिरस्ति ।
अनुपादायोत्तरे प्रथमा सिध्यतीति ।
अथाप्या[14]ह—प्रजापतिर्वा एषा सꣳस्थानां यद[15]ग्निष्टोमः ।
तां यदकृत्वाथान्यां कुर्यात्, प्रजापतिरस्य हिꣳसि[16]तः स्यादिति ।
यावदादेशमुत्तरे सर्वत्र ।
अथाप्यूर्ध्वानामेव सꣳस्थानां कृतानां वेद[17]ति—
"देवा वा[18] अग्निष्टोमे[19]मभिजित्योक्थानि नाशक्नुवन्नभिजेतुम्"[20] इति ।
PB. 8. 8. 1.

---

1 अग्निष्टोमं B. 2 ॰मां C, G1, G2, J. 3 B adds इति. 4 ॰प्युग्रु॰ G1, J. 5 ॰न्ति परो॰ C, G1, G2. 6 ॰य॰ G1, G2. 7 ॰ब्रमग्नि॰ C, J; ॰स्त्वाग्नि॰ G1. 8 ससा॰ J. 9 ॰मां G1, G2, J, K. 10 Wanting in C, G1, G2, J, K. 11 ॰वति G1, G2, J, K. 12 ॰पार G1, G2, J. 13 स्थे ··· सꣳस्थानां (line 12) wanting in J. 14 अथा प्राह G1. 15 यदग्नि॰ J. 16 ॰ꣳसमित G1. 17 ॰दे॰ G1. 18. Wanting in G1, G2. 19 ॰ष्टोमंभिजित्योस्थानि G1; ॰जित्वो-स्थानि G2; ॰ष्टोननेजित्या स्थानिस्थानि J. 20 C, J add देवा वा उक्थान्यभिजित्य रात्रिं नाशक्नुवन्नभिजेतुन्; G1, G2 add देवा वा उक्थान्यभिजित्य रात्रिं नाशक्नुवन्नभिजेतु देवा वा उक्थान्यभिजित्य (॰जि G1) म्.

अथापि नैतंद्देवताः प्राह्न राका सिनीवाली सरस्वती विष्णुरिति ।
सौविष्टकृतं खल्वेतत् सोमस्य स्थानं यदाग्निमारुतम् ।
योऽयं देवताः शंसन् सोऽप्यतिरात्रे संतीहैव प्रत्याहृत्य शंसतीत्युक्थ्या ।
तां प्रथमां मन्य इति गौतमः ।
एवमाप्ताहर्मात्रासमानि सवनानि अभ्युंद्भिपन्ते ।
आर्भवच्छन्दांसि अनुविधीयन्ते ।
प्रस्थितयाज्या ग्रहैश्च शस्त्रैश्च ।
अप्यहमेनमापूर्त्तिनमिव मन्ये योऽग्निष्टोमयाजीति ।
ध्रुवमनु द्वादशस्तोत्रात्पूर्वं तत्प्रस्थितयाज्याभिर्विजानीम इति ॥ १ ॥
अतिरात्रीं प्रथमां मन्य इति धानञ्जय्यः ।
कृत्स्नं पूर्वं कर्म परिपादया इति ।
अथापि सं मिमीते ।
"एषा वाग्निष्टोमस्य सम्मा यद्रात्रिः ।" PB. 9. 1. 23.
"एषा वा उक्थस्य सम्मा यद्रात्रिः ।" इति । PB. 9. 1. 25.
कुतो दृष्टेन प्रमा स्यादिति ।
अथापि नः स्तोमसमाम्नायः ।
प्राह—अतिरात्रस्यैव स्तोमसमाम्नायो भवति ।
अथापि न उक्थसमाम्नायः ।
प्राह—अतिरात्रस्यैव प्रथममुक्थानि समामनामः ।
अथापि नः कर्मणो यजूंष्यपि प्राहुः—
उपरि सन्धिभक्षात् स्तोमविमोचनमधीमहे ।

1 नोन्तदेवताः B; नोतद्देवताः G1, G2, J. 2 ०विकृद० K. 3 ०त्स्य B. 4 C, G1, G2, J add स; सा यायं K. 5 शंसिरुस्ता मप्य० C; शंसिरुस्ता मप्य० G1, G2, J, K. 6 स is wanting in B. 7 प्रम्या० C, G1, G2, J. 8 ०र्थं C; ०र्थ G1, G2, J; ०र्थम K. 9 एवं प्राप्ता० C. 10 मप्यु० C, G1, G2, J, K. 11 अनुधी० B. 12 ०तप्राया C; ०तयाया G1, G2, J. 13 ०मेतमेवमा० C. 14 ०भिर्वि० B. 15 ०रात्रं C. 16 ०र्मा B. 17 परिपादया B; ०परीपादाय C. 18 समिते B. 19 सेमा रात्रिः G1, G2, J. 20 कु is wanting in G1, G2, J, K. 21 प्रामा G1, G2, J, K. 22 स० B, G1, G2, J, K. 23 ०मः स० G1, G2, J, K. 24 ०यः G1, G2 J. 25 ०मः स० B. 26 ०भवतो B. 27 ०न्ति G1, G2, J, K. 28 ०क्थ्य० C, G1, G2, J, K. 29 ०क्थ्यानि C. 30 समाम is wanting in G1, G2. 31 यजूंषनिं प्रा० C क. 32 ०मक्ष G1; ०भक्षत् G2, J. 33 ०ना० G1, G2, J.

यन्नूनमन्या प्र[1]थमा सꣳस्थाऽभविष्यत् प्राकृतं[2] स्तोमविमोचनं समाम्नास्यन्निति ।
अथापि शश्वद्बह्वृचा अतिरात्री[3]मेव प्रथमा[4]मधीयते ।
तासां कां काम्या का स[6]र्वाभिप्रायेति ।
आ[7]ग्निष्टोमीं चातिरात्रीं च ब्रुवते शौचिवृक्षाः ।
सर्वाभिप्रायेऽनवधारितकामे भवत इति ।
"एकस्मा अन्यो यज्ञः कामायाह्रियते सर्वे[9]भ्योऽग्निष्टोम" इति न काममवधारयति । PB. 6. 3. 2.
ज्योतिष्टोमेनातिरात्रेणर्द्धिकामो यजेतेति नैव काममवधारयति ।
"पशुकाम उक्थेन स्तुवीत" इति काममवधारयतीति । PB. 8. 8. 8.
सोऽशिथिला परिसꣳस्थिता भवतीति ।
सर्वाः सर्वाभिप्रायाः ।
सर्वासु काम्यानि विद्यन्त इति शाण्डिल्यः ।
तथा गौतमधानञ्जय्यौ ।
सर्वाभिप्रायैः खल्वयं ज्योतिष्टोमः ।
स[12]र्वाभिरेव सꣳस्थाभिः सर्वाभिप्रायो भवतीति[13]
यद्वेतदवधारितकामेति, पश्यामो वै वयꣳ सर्वाभिप्रायेषु काममवधार्यमाणम् ।
यथोपवी[14]ती ग्रामकामस्य, प्रतिष्ठाकामस्य रथन्तरꣳ सन्धिपामेति रथन्तरꣳ सन्धिपामेति[15] ॥ २ ॥

स[16]प्तमः पटलः

तस्य खल्वस्य ज्योतिष्टोमस्य षड् व्यञ्जनस्थानानि भवन्ति—
प्रतिपद् गाय[17]त्रंणिधनं विष्टुतिर्ब्रह्मसामोक्थप्रणयः सन्धि[18]पामेति ।
तेषां किं[19] काम्यं किꣳ सर्वाभिप्रायमिति ।
ये[21]द्यत् खल्वस्य ज्योतिष्टोमस्य च[22]रति तत्तत्सर्वाभिप्रायम् ।
अथ यत्कामं[23] निवर्तते तत्का[24]म्यम् ।

1 प्र॰ is wanting in G1, G2, J, K. 2 ॰कृतं C, G1, G2, J, K. 3 ॰त्रमेव B; ॰त्री G1, G2, J. 4 ॰मम॰ B. 5 Wanting in C. 6 सर्वप्रयेति B. 7 अग्नि॰ B. 8 Wanting in K. 9 ॰भ्ये B. 10 स्य is wanting in G1, G2, J. 11 ॰प्रायसं ख॰ G1, G2; ॰प्रायः सं ख॰ J; ॰प्रायस ख॰ K. 12 C, G1, G2, J, K add 13 ॰वती G1, G2, J, K. 14 ॰वीनी G1, G2, J, K. 15 C does not repeat it. 16 In B only. 17 ॰त्रं त्रिणि॰ C. 18 ॰न्धिसा॰ C, K. 19 Wanting in J. 20 प्रतिपश्च C, G1, G2, J, K. 21 ॰म G1, G2, J. 22 चरिते B. 23 ॰काम्यं C, G1, G2, J, K. 24 ॰कामम॰ B. C, G1, G2, J, K.

प्रतिपत् सर्वाभिप्राया।
सर्वा ह्यवधारितकामा भवन्तीति।
उ[1]पवतीत्याहुः।
प्रथमा[2]मन्वेनामधीमहे।
अपि चैनां[3] ग्रामकामस्यो[4]ह—ग्रामैः[5] सर्वाभिप्रायो भवतीति।
अथाप्यस्या[6]चारं दर्शयति—
ततश्चतुर्षु मासेषु शुना[7]सीर्यस्य लोके[8] ज्योति[9]ष्टोमोऽग्निष्टोम उपवती[10] प्रतिपदिति।
"एषां[11] रथन्तरपृष्ठेऽग्रियवती बृहत्पृष्ठेऽग्रियवद् बार्हतं रूपमुपव[12]द्राथन्तरमुपवती रथन्तरेऽग्रियवती बृहतीति च भाल्लविनाम्।" Ārṣ. K. V. 18 a.
अथाप्येनां[13] सा[13]हस्योत्तमे स्तोत्रीय[14]स्योत्तमां दर्शयति—
औभय[15]साम्यात् तां न प्रथमाम्।
प्रा[16]ह्ण ए[17]वैव तद् व्याख्यातम्।
अथाप्याहाभिषेचनीये—
'यत्ते' 'पवस्व वाचो अग्रियः' इति, SV. 2. 125; RV. 9. 62. 25; PB. 4. 2. 17; Ārṣ K. I. 1 b.
तेन यज्ञमुखान्न यन्ति।" इति। PB. 18. 8. 10.
भक्तस्यो[18]पश्रयं दर्शयति।
त[19]दपि शश्वद् ब्राह्मणं भवति—
एते वा[20]व प्रतिपदौ[21] सर्वाभिप्राये यदुपवती चाग्रियवती च।
[ कामाय वा इतरा आह्रियन्त इति। ][22]
स्वरो गायत्रणिधनानां प्रथमा[23] त्रिष्टु[24]तीनां श्यैतं[25] नौधसे ब्रह्मसाम्नाम्।
षडुक्थानि सर्वाभिप्रायाणि भवन्ति।
साकमश्वं सौभरनार्मेधे हारिवर्णो[26]द्वंशीये आष्टा[27]दंष्ट्रमिति।

1 अपव० J. 2 ०मा चैनाम० C; ०मां चैनामधोनामधीमहे G2. 3 तां C; चैतां G1, G2, J; च तां K. 4 ०स्य ह० C. 5 ग्रामः B. 6 ०स्याश्रिरं C; ०स्याश्रिरं G1, G2, J, K. 7 ०नाशी० C; ०नास्सीर्ये J. 8 ०क J. 9 ज्योति ज्योतिष्टोम G1, G2; ज्योतिष्टोम उप० J; 10 उपपदी B. 11 एषां B. 12 C, G1, G2, J, K omit द्राथन्तरमुपव. 13 सासह० G1, G2, J. 14 ०त्र० G1, G2, J. 15 औभय स्यौभय० G1, G2; औभयस्यौभय० J. 16 त्र० G1, G2, J, K. 17 G1, G2, J omit ए. 18 ०स्यपिश्रयं B; ०स्या प्रश्रयं C; ०स्या प्रश्रयं G1, G2; ०स्या प्रश्रयं J. 19 त is wanting in G1, G2. 20 वा B. 21 ०पादौ G1, G2, J. 22 Wanting in B. 23 B, K add प्रथमा. 24 त्रिष्टु० J. 25 ०श्ये० G1, G2. 26 हावर्णोद० G1, G2; हार्वणोद० J. 27 आष्टा० B.

तषां का[1]न्युक्थे कान्यतिरात्र इति ।

सर्वेषां याथाकामीति[2] शाण्डिल्यः ।

हारिवर्णोद्वंशीये वा हारिवर्णा[3]ष्टादंष्ट्रे वोकथान्ते [चैवं[4]] कुर्यादिति गौतमः ।

अति[5]रात्रे सौभरनामधे ।[6]

तच्चर्या[7] जानीमः ।

हारिवर्णोद्वंशीये वा हारिवर्णा[8]ष्टादंष्ट्रे वोकथा[9]न्ते चैव कुर्यादिति[10]।

अ[11]तिरात्रे चेति धानञ्जय्य[12]ः ।

सौभरनामधे त्ववोक्[13]थान्ते न कुर्यादिति ।[14]

रथन्तरं सन्धिपार्ष्णो[15]ं सर्वाभिप्रायम् ।

तद्धि[16] चरति ।

तत्र यानि कामावधारणानि सर्वाभिप्रायेषु[17] तानि भवन्ति ।

तानि खल्वेतानि व्यञ्जनान्येकजातीयान्येव समादध्यात् ।

एवं चाव्याहतः क्रतु[18]र्भवति ।

अपि चैवमार्षेयकल्पो दर्शयति ॥ ३ ॥

अथानुष्टु[19]भस्य भागस्य का छन्दोभक्तिरिति ।

एकाक्ष[20]रां ब्रुवते [21]शौचिवृक्षि[22]ः ।

तद्विजानीमः ।

बह्वक्षरमवादो भवति ।

एकाक्षरा वै वा[23]क् ।

अक्षरेणान्ततः प्रतिष्ठाप्यमक्षरम् ।

व्यक्षरमुच्छिष्यत इति हि भवतीति ।

सर्वैव द्वात्रिंशदक्षरेति शाण्डिल्यः ।

तथा गौतमधानञ्जय्यौ ।

---

1 कन्यु० J. 2 ०मी G1, G2, J, K. 3 हावर्णा० G1, G2, J. 4 Wanting in B, C; वव G1, G2, वैव J. 5 ति is wanting in G1, G2, J. 6 B reproduces here त्वेवोक्थान्वे न कुर्यादिति रथन्तरं सन्धिषाम्नां सर्वाभिप्रायं तद्धि चरनि । (lines 9-11). 7 ०च्चर्याय B; ०चर्यो J. 8 ०र्णावाष्ट्रा० B. 9 ०वर्ष्यक्थाते G1, G2, J. 10 ०र्याद् C. 11 रात्रे G1, G2, J. 12 ०य्ये B. 13 वो० C; न्वो (त्वे G2) वोक्थान्ते कुर्यादतिरात्रे चेति धानञ्जय्यः सौभरनामेधे वो० G1, G2, J. 14 K repeats रात्रे चेति ··· कुर्यादिति. 15 ०षाम्लं G1; ०षाम्लां G2, J, K. 16 तद्विच० C, G1, G2, J. 17 ०ये सुतानि C. 18 ०तुर्त्तवति G1, G2, J. 19 ०ष्टुभाग० G1, G2; ०ष्टुप्भाग० J. 20 ०तो G1, G2, J. 21 शो० G1, G2, J. 22 ०क्षः G1, G2, J. 23 वा is wanting in G1, G2, J.

एतामनुष्टुबित्याचक्षते ।

अथाप्येनामनुष्टुबर्थे [ निधीयमानां ] पश्यामः ।

अथापि यस्तावदेकुशलं छन्दसामौक्थ्यैकामनुष्टुभं पृच्छेदेतामेव द्वात्रिंशदक्षरामाचक्षीत ।

तत्खलु गायत्रं प्रातःसवनं, त्रैष्टुभं[7] माध्यन्दिनं, जागतं तृतीयसवनम् ।

यदूर्ध्वमुक्थेभ्य आनुष्टुभः स भाग इति ।

कथमु द्वादशस्तोत्र आनुष्टुभो भागः स्यादिति ।

सवनानि प्रति[11] प्रविष्ट इति गौतमः ।

"अष्टाक्षरा गायत्री, हिङ्कारो नवमः, एकादशाक्षरा त्रिष्टुप्, द्वादशाक्षरा जगती छन्दोभि[13]रेवानुष्टुभमाप्नोति यजमानस्यानवलोपाय ।" इति । PB. 6. 3. 13.

अन्तस्थान एष भाग इति शौचिवृक्षिः[15] ।

एकविंशस्तोमो वाक् सामान्तः ।

एष नूनं द्वादशस्तोत्र आनुष्टुभो भागः स्यादिति ।

सर्वैव षड्विंशदक्षरेति शाण्डिल्यः ।

तत्र यच्चत्वार्यक्षराण्युपोहयति परोक्षीचिकीर्षन्निति ।

ऐदमत्यवरोहः शौचादिरेयः ।

यथैतद् ब्राह्मणम्—द्वादशाक्षरमेकादशाक्षरमष्टाक्षरं वाग्द्वात्रिंशीति[24] ।

पञ्चदशस्तोत्रे सवनानि प्रति प्रविष्ट इत्येव गौतमः ।

अच्छावाकस्तोत्रीये शौचिवृक्षिः ।

अथ षोडशिनि सर्वैव चतुस्त्रिंशदक्षरेति शाण्डिल्यः ।

तत्र यद् द्वे अक्षरे[28] उपाहरति परोक्षीचिकीर्षन्निति[29] ।

उपसर्गाक्षराणि शौचिवृक्षाः ।

---

1 तथा० B. 2 Wanting in B; G1, G2 repeat य. 3 ०मानानां C, K. 4 ०दन्कु० G1, G2; ० दकु० J. 5 ०क्थ्यक० C, G1, G2, J, K. 6 G1 repeats पृच्छेदेतामेव द्वात्रिंशद्; G2 repeats within brackets पृच्छेदेतामेव द्वात्रिंशद. 7 C, K add सवनं; G1, G2, J read ०नसवनं सवनं. 8 ०न्दो G1, G2, J. 9 ०र्थं G1, G2, J, K. 10 अ० G1, G2, J. 11 Wanting in G1, G2, J, K. 12 ये० G1, G2, J. 13 भि is wanting in G1, G2, J. 14 अन्तन्त० C. 15 ०क्षः G1, G2, J. 16 ०म० G1, G2, J. 17 ०मसानु० C; ०त्रं अनु० G1, G2, J; ०त्रं मानु० K. 18 षट् त्रिंश० C. 19 ०त्रैव C. 20 ०य० B. 21 ०तिर्धीर्षन्निति G1, G2; ०तिर्धीर्षन्निति J. 22 पाद० B. 23 शौचादिरे० B; शौचादिरयेः C. 24 B omits ति. 25 C, G1, G2, J, K add अथ. 26 ना is wanting G1, G2. 27 ०ष G1, G2. 28 G1, G2, J add करोति. 29 इति is wanting B, K.

दशाक्षरपाद॰ शौचाद्रिरेयः[1] ।
अथातिरात्रे सर्वैव द्वात्रिंशदक्षरेति शाण्डिल्यः ।
तां यदभ्यासेन करोति परो[2]क्षीचिकीर्षन्निति ।
वैत[3]हव्यस्तोत्रीये[4] शौचिवृक्षाः[5] ॥ ४ ॥
अथाय॰ सन्धिरन्तर्भागं भवती[6]३ बहिर्भागमिति ।
बहिर्भागमित्याहुः ।
समाप्तेषु भागेष्वागच्छति ।
[ अथाप्येस्या[7] छन्दसा भक्षयति बहिर्भागमिवैव स तत[8] इति ।[9]
अन्तर्भागमित्यपरम् ।
का सा भक्तिर्या बहिर्भागमिति ।
अथाप्येनमुक्थैः सम्मिमीते ।
अन्तर्भागमुक्था[10]नि भवन्ति ।
अन्तर्भागः सन् किंभागः स्यादिति ।
गायत्र इत्याहुः ।
समाप्तेषु भागेषु पुनरुपक्रमे कोऽन्यो[11] गायत्रै[12]वान् स्यादिति ।
सर्वभाग इत्याहुः ।
सर्वभागं पृष्ठं ह्यत्र रथन्तरमिति ।
आनुष्टुभ इत्यपरम्, रात्र्यानुबन्धतयेति ।
क्रमे भवती३ समास इति ।
क्रमे भवतीत्याहुः ।
समस्तेऽक्षरे रात्रिपर्यायाः क्रमे सन्धिरिति[13] ।
अपि वा क्रमे रात्रिपर्यायाः समस्तेऽक्षरे सन्धिरिति ।
नैते[14]दिह विज्ञायत इति शाण्डि[15]ल्यायनः ।
अमुत्र खल्वेतद् दश[16]रात्रे विज्ञायते ।
इदं पदस्य स्थानमिदमक्षरक्रमस्येदं वृद्धेरिद॰ समासस्येति ।
तत्रै[17] हि द्विर्भागाः प्रकल्पयन्त[18] इति विज्ञायत एवेति ।
वाजाः[19] पदस्थान्यहःसवनानि क्रमे, षोडशी तमप्यभिविहार॰ स्र[20]॰सेति ।

1 शौवाजिरेयः B. 2 परो is wanting in G1, G2, J. 3 त is wanting in G1, G2. 4 ०त्राये G1, G2, J. 5 ०क्षः G1, G2, J. 6 भवति B. 7 ०प्यास्यास्या G1; ०प्या० G2, J. 8 त G1, G2, J. 9 B omits up to p. 50. 17. 10 ०कानि G1. 11 कोत्या G1, G2, J. 12 ०त्र G1, G2; ०त्रत्या० J; ०त्रः K. 13 रि is wanting in G1, G2, J. 14 ०दिहर्वि० C. 15 ०ल्योनः G1, G2, J. 16 ०तरेश० G1, G2, J. 17 तर्हि for तत्र हि in G1, G2, J. 18 ०स्पन्त J, K. 19 वाज्यः पदः स्थान्यहः स च भानि क्र० G1; वाज्यः पदः स्थान्यहः सव० G2, J, K. 20 स्र॰ is wanting in J.

एतमे[1]वोत्तरक्रममनुचिख्यापयिषन् वृद्धौ रात्रिपर्या[2]यस्थानमप्यभ्यस्यति ।
"अभ्याघात्य[3]सामानो हि छन्दोमाः" इति । PB. 14. 9. 30.
तदप्युभयोः सन्ध्योः सतोरेतमेव सन्धिरित्याचक्षते समासादिति ।
एतेन[4] सर्वैकाहेषु सामभागा व्याख्याताः ॥ ५ ॥

अथ दशरात्रे कथं भागा इति ।
याथा[5]कामी भागानामित्येक[6] आहुः ।
अ[7]स्त्येवैकभाग्यमस्ति सर्वभाग्यम् ।
अपितु त्र्यहःश एव भागा स्युः ।
गायत्रः प्रथमक[8]ल्पेऽहः ।
त्रैष्टुभो द्वितीयः ।
जागतस्तृतीयः ।
आ[9]नुष्टुभः षोडशी ।
आनुष्टुभं दशम[10]म्[11] ।
तदप्येवं[12]मिव ब्राह्मणं भवति—"प्रातःसवनेनैव प्रथ[13]मस्त्रिरात्रः[14] कल्पते । माध्यन्दिनेन सवनेन द्वितीयः,[15]" तृतीयसवनेन तृतीयः, अग्निष्टोमेन साम्नैव दशममहः ।" इति । PB. 10. 5. 11.
अथापरं गायत्रं][16] [18]त्रैष्टुभं जागतमिति प्रथमस्त्र्यहः, एवमेव द्वितीय[17] एवं तृतीय[19]ः ।
आ[20]नुष्टुभः षोडशी ।
आनुष्टुभं दशमम् ।
अथापरं गायत्रं त्रैष्टुभं जागतमिति प्रथमस्त्र्[22]यहः ।
आनुष्टुभो द्वितीयः[23] ।
गा[24]यत्रं त्रैष्टुभं जागतमिति तृतीयः ।
आ[25]नुष्टुभः षोडशी ।
आनुष्टुभं दशमम् ।

1 एतम० G1, G2, J; एवमे० K. 2 ०र्यायास्थानप्य० C; ०र्यास्थानप्य० G1, G2, J; ०र्याया० K. 3 ०त्यपसा० G1, G2, J, K. 4 अनेन K. 5 याथोकामी G1, G2, J. 6 क is wanting in G1, G2, J. 7 अस्तोरे० G1, G2, J, K. 8 ०कल्पम० G1; ०कल्प्य G2. 9 ०स्त्राहः G1, G2, J. 10 अनु० J. 11 ०मं G1, G2. 12 ०प्येवमिव G1, G2, J, K. 13 ०सर्व० G1. 14 म is wanting in G1, G2, J. 15 ०यः । ए० G1, G2. 16 Omitted by J. 17 तृतीयः J, K 18 B resumes from here ( see p. 49 line 8 ). 19 ०रा G1, G2, J, K. 20 ०रा G1. 21 अनु० J. 22 ०स्त्रयो० B. 23 ०यम् B. 24 गः ए० G1, G2, J. 25 अनुष्टुभ G1, G2, J.

अथापरं गायत्रं त्रैष्टुभं जागतमानुष्टुभमिति प्रथमश्चतुरहः।
एवमेव छन्दोमचतुरहो बहिर्भागे[1] पञ्चम[2]षष्ठ इति।
अथापरं पदस्थः प्रथमस्त्र्यहः, [3]अन्तरस्थो द्वितीयः, वृद्ध[4]स्तृतीयः।
आनुष्टुभः षोडशी।
आनुष्टुभं दशमम्।
ते खलु शश्वद् भाल्लविनो भक्ताननुव्यूहन्ति।
जगती प्रातःसवन[5] आगमत्।
तत्र [6]जगच्छन्दसा भक्षयिष्याम इति।
न वयमनु[7]व्यूहामः।
सवनभक्तिमात्रा एव भक्षेषु स्म[8] इति।
अथ सं[9]वत्सरे चतुर्विंशं लुप्त[10]भागमिति शौचिवृक्षिः।
गायत्रं वा स्तोममात्रेण, त्रैष्टुभं वा स्थानेन, सर्वभागं वै[11]काह्यात्।
अथाभिप्लवा ऐ[12]काहिका वा स्तोममात्रेण षा[13]डहिका वा तन्त्रमात्रेण।
त्र्यहभागात्स्वरसाम्नामानुष्टुभो विषुवांश्चातुर्थ्यात्[14] सर्वभागो वैकाह्यात्[15]॥६॥

अथाहीनेषु द्विरात्राणां गायत्रं पूर्वमहः।
त्रिभागमुत्तरं यत्प्राग् ब्रह्मसाम्न[16]स्तत् त्रैष्टुभम्।
ब्रह्मसामप्रभृति जागतम्।
आषोडशिनः षोडशि[17]प्रभृति परमानुष्टुभम्।
त्रिरात्राणां गायत्रं प्रथममहः, जागतं द्वितीयम्, त्रैष्टुभं तृ[18]तीयम्।
आषोडशिनः षोडशिप्रभृति परमानुष्टुभम्।[19]
वैदत्रि[20]रात्रे सर्वभागान्यहानि।
चतूरात्राणां गायत्रं त्रैष्टुभं जागतमिति त्र्यहः।
अन्तरान्तरे[21] चतुर्थमिति शौचिवृक्षिः।
सम[22]स्तेऽक्षर इति गौतमः।[23]
पञ्चरात्रेष्वन्तराक्षरयोरेव चतुर्थपञ्चम इति शौचिवृक्षिः।[23]

1 ०र्भागं C, G1, G2, J, K. 2 ०म इत्ये ष० G1, G2, J; ०म इत्य ष० K. 3 अत्वस्थो B. 4 वृद्धिस्थस्तृ० C, G1, G2, J, K. 5 ०नमागमं C; ०ने मागमं G1, G2, J; ०र्नं मागमद् K. 6 जागतच्छ० C; जागतं छ० G1, G2; जगतं छ० J. 7 ०व्यु० G1, G2, J. 8 सम B. 9 सुव० B. 10 ०भ्य० C, G1, G2, J, K. 11 वैकाह्यादिति C, G2, J, K; वैत्यकाह्यादिति G1. 12 ऐक G1, एके G2, J, K. 13 षोडाहिका B; षाडाहिंका G1, G2; ¯डहिंका J. 14 ०र्थ्या G1, G2, J, K. 15 ०ह्यादिति C, G1, G2, J, K. 16 B omits तद्. 17 ०शिनप्र० G1, G2, J, K. 18 Wanting in G1, G2, J. 19 B repeats it; wanting in J. 20 ०ति० B. 21 अन्तरान्तरे G1, G2, J, K. 22 ०स्ये० B. 23 G1 omits it.

समस्तेऽन्तर इत्येव गौतमः ।

पञ्चरात्रप्रभृतिषु दाशरात्रिका भागा यावद्यावदभिप्राप्नुयुः ।

अथ यत्राहीन एकाहैर्वर्तेत सर्वभागास्तत्रैकाहाः स्युरित्येके ।

आहीनिका भागा यथास्थानमित्यपरम् ।

एतेनाहीनेषूपधीयमाना व्याख्याताः ।

अथ ये ऊर्ध्वं दशरात्रादुपधीयेरन् ये वा मध्ये दशरात्रस्य भागपर्वणि सर्वभागा एव ते स्युः ।

एतेन सत्रेषूपधीयमाना व्याख्याताः ।

अहीनैकाहसमासा ह्येव सत्राणि भवन्ति ॥ ७ ॥

अथ सुब्रह्मण्यायां विचारयति—

ऋग्नु खल्वियं भवती३ सामेति ।

ऋग्भवतीत्याहुः ।

ऋच इवास्या नामधेय१ सुब्रह्मण्येति ।

सामेत्यपरम् ।

गीत१ हि भवति ।

अथाप्याहुः—मन्त्र एव खल्वेयं शिथिलो भवति, आह्वानार्थस्तस्येयमभ्या इय१ स्यादिति (?) ।

अथाप्याहुः—नैवेयमृङ् न साम सुब्रह्मैवेदमिति ।

ब्रह्मणो भवती३ उद्गातुरिति ।

ब्रह्मणो भवतीत्याहुः ।

एतेन ह्यग्रे संयुज्यते ।

अथापि ब्रह्मा सुब्रह्मण्य इति नामधेयसारूप्यात् ।

अथोऽप्येव१ सर्वा अहोरात्रा वषट्कारिण्यो भवन्ति ।

उद्गातुर्ग्नाग्नीध्रः सम्पद्यत इति ।

उद्गातुरित्यपरम् ।

---

1 दश० G1, G2, J. K. 2 B adds वा. 3 यथा० B. 4 योऽहीन B. 5 स्सर्व भागाः । स्तत्रै० G1, G2; स्सर्व भागाः स्तत्रै० J; स्सभा० K. 6 ०क C, G1, G2, J, K. 7 B reads अत for अथ ये. 8 अहैनै० G1, G2, J. 9 ०माहो B, G1, G2, J, K. 10 व is wanting in C. 11 ऋगु C; भगु G1, G2, J. 12 ०ति B. 13 इदमृ० B. 14 व is wanting in G2. 15 खल्वियं B. 16 ०नार्थ० B. 17 ०स्येयनभ्या१ यिव१० C; ०स्येमभ्यायिव१ सा स्या० G1; ०स्येमभ्यायिव१ सा स्या० G2, J; ०स्येमभ्यायिव-सा स्या० K. 18 ०व० B. 19 ०ति B. 20 भागधेय० G1, G2. 21 अथाप्येव G1, G2; अथाप्येवा स० J. 22 होत्रा B. 23 ०र० C. 24 ०न्ति G1, G2.

गीतकारी हि[1] भवति ।
[सं[2]] यदभक्षाः[3] पुरा ह्य[4]भक्षेभ्यः कर्मा[5]पवृज्यत इति ।
अथै[6]नानागतत्वात् कालादहीनेषु सत्रेषु[7] याजमानात् "नामग्राहः किमर्थः" इति । Arṣ. K. V. 7a.
उच्चावचचरणाः स्त्रियो भवन्ति ।
स इ[8]दं देवसाद्ये च मनुष्यसाद्ये च येषां पुत्रो वक्ष्येते[9], तेषामेव पुत्रो भविष्यामि, यां[10]श्च पुत्रान् वक्ष्ये[11]ति ते मे पुत्रा भविष्यन्ती[12]ति शाकटीमन्ववरुह्याह्वयेद्द्राह्णो[13]ऽप्रत्यारोहायाप्रत्यारोहाय ॥ ८ ॥

अ[14]ष्टमः पटलः

अथातो दशरात्रः ।
तस्य ब्राह्मणेनैव द्रव्यसमुद्देश उक्तः ।
यानि चैतानि ज्योति[15]ष्टोमानि द्रव्यल[16]क्षणानि ।
यानि च पृष्ठैः समान[17]रूपाणि ।
यानि च[18] दश[19]रात्रेण समानसङ्ख्यानि ।
यथैतत् प्र[20]थमानि प्रथमे[21] द्वितीयानि द्वितीय इति ।
स्था[22]नतो[23]ऽसमान[24]सङ्ख्यं सम्पश्येत् ।
अथैताः सप्त नाम[25]विभक्तयः—
स तं तेन तस्मै तस्मात् तस्य तस्मिन्निति ।
आमन्त्रिताऽष्टमी ।
स खलु विभक्तिमामन्त्रितां प्रथमेऽहनि करोति ।
कस्य हेतोरिति ।
प्रत्यक्षवि[26]भक्ति रथन्तरम् ।
आमन्त्रितस्य न परोक्षमस्तीति ।
[अथाप्येषा प्र[27]थमाग्निमन्थनीया भवति, तां चतुर्थेऽहनि करिष्यन् भवति ।[28]

1 इ C, G1, G2, J, K. 2 Wanting in B. 3 ०भक्षेभ्यः C; ०भक्ताः G1, G2, J; ०भक्षाः K. 4 स्व भ० C, G1, G2, J, K. 5 कर्म प्रवृ० C; कर्मा-वृ० J, K. 6 अतिनागतत्वात् B; अथैतानाग० C. 7 G1 adds स. J. 8 इ G1, G2. 9 वक्ष्येते B; वक्ष्यते, तेषामेव पुत्रो is omitted by C. 10 यंश्च० G1. 11 वक्ष्ये C; वक्षे J, K. 12 ०ष्यतीति G1, G2, J, K. 13 ०ह्णो प्र० B. 14 In B only. 15 ज्यो० C. 16 द्रव्याणि C. 17 न is wanting in G1, G2, J. 18 चतुर्द० G1, G2. 19 दशारेण B; ०र्शरात्रे J; ०रात्रे K. 20 मायत्मानि G1, G2, J. 21 प्रथमद्वि० C, G1, G2, J, K. 22 G1, G2, J add संख्य. 23 ०तोऽपि स० C, 3, K. 24 ०नं द्रव्यं सम्प० C; ०नं सम्प० G1, G2, J, K. 25 म is wanting in B. 26 वि is wanting in B, C. 27 प्रथिमा० G1, G2, J. 28 Wanting in B upto p. 54. 17.

तनिति द्वितीया, तां द्वितीये ।
तेनेति[1] तृतीया, तां तृतीये ।
तत्त्वा इति चतुर्थी, तस्यां न द्रव्यं विद्यमानमाहुः ।
एतामुदाहरन्ति—
'प्र तव्यसीं नव्यसीं धीतिमग्नये' इति ।
RV. 1. 143. 1.
सैषा प्रतर्वती भवति मानान्तेऽपरूपा ।
स इति प्रथमा, तां चतुर्थेऽहनि करोति ।
कस्य हेतोरिति ।
प्रत्यय एव मानानां प्रत्यय एव विमर्शनान् ।
प्रत्यये प्रत्ययन् ।
अथापि नामधान्येषा भवति ।
एतस्मिन्नहन्यग्निं जनयन्ति ।
जातस्तो मानं धीयत इति ।
तस्य ब्राह्मणं भवति—"देवा वै धियमैच्छंस्तामु प्रथमेऽहन्यविन्दन्न द्वितीये न तृतीये, तां चतुर्थेऽहन्यविन्दन्" इति । PB. 10. 7. 2.
एतां श्रियमाह—
नामधेयं[12] ह विमर्केणः[13] श्रिता भवन्तीति[14] ।]
सैषाप्येषा[15] द्विसंस्थाया पञ्चमेऽहनि भवति ।
तस्येति वा तस्मादिति[16] वा ।
तस्मादिति भवतीति गौतमः ।
तौर्[17] ग्रस्वदेके चतुर्थी[18] ब्रुवते ।
तां ततो नामधान्या प्रच्युतामनन्तरस्मिन्नहन्यनुगृह्णाति ।
तदप्येतेनैव ब्राह्मणं भवति—"तेनो[22] धीः प्रत्युपोदितेति" । PB. 10. 7. 2.

1 ते is wanting in G1. 2 Omitted by G1, G2. 3 Wanting in G1, G2. 4 तत्त्वा G1, G2. 5 नव्यसीं G1, G2, J, K. 6 प्रत्यय— विमर्शनान् wanting in J. 7 मन G1, G2; मानम J; मान K. 8 देवा J. 9 ०स्मिन्नहस्त्वान्य G1, G2, K, J. 10 ०विदन्विदन् K. 11 ०हन्य हन्य विद० G1, G2. 12 ०न्दे G1, G2, J, K. 13 ०क्तिः G1, G2, J, K. 14 ०न्तीति G1, G2, J, K. 15 B resumes from here (see p. 53. 24); G1, G2, J, K omit भवन्तीति— तस्मादिति (line 20). 16 तस्मादिति वा is omitted by C. 17 ताः स्विदेके B. 18 चतुर्थं B, G2, J. 19 ०तामनन्तरा० C. 20 तदप्येतेनैव G1. 21 ०न्तीति K. 22 तेना B, G1, G2.

ब्रह्मण[1] आज्ये नि[2]रुच्यते—

'इन्द्रात्परितन्वं मंमे'[3] इति। SV. 2. 340; RV. 8. 76. 12.

तस्ये[4]ति भवतीति धानञ्जय्यः।

सा षष्ठी, तामामन्त्रितया प्रच्युतामनुगृह्णाति।

अथाप्येतयोः पूर्वयो[5]स्तृतीयया समानं द्विवचनम्।

स तयैवं ते उपा[6]प्ते अमंस्त—

अपि वा प्रत्यवरोहार्थं एवाकरिष्यत्।

समूढा[7]ज्ये निरुच्यते।

'अग्ने[8] स्तोमं मनामहे सिध्रमद्य दिविस्पृशः।

देवस्य द्रविणस्य वेः[9]॥' SV. 2. 755. RV. 5. 13. 2; MS. 4. 10. 2: 145. 12; KS. 20. 14.

इत्यभविष्यदिति।

अथा[10]पि व्यूढाज्य एव भवति।

'तव श्रियो वर्ष्यस्येव विद्युतः' इति। SV. 2. 332. RV. 10. 91. 5; PB. 13. 2. 1.

त्वे[11]ञ्छ्रिय इत्यभविष्यदिति।

आमन्त्रि[12]तैव षष्ठे भवति।

एव[13]माद्यवसानसमाधिरिति ॥ ९ ॥

"अथैषा स्वरवि[14]भक्तिः—औ[15]शनं प्रथमे, वासिष्ठं द्वितीये, उभयतः स्तोभं[16] गौतमं तृतीये, आभीशवं चतुर्थे, आ[17]नूपं पञ्चमे, इडवद्वामदेव्यं षष्ठे।

अथैषा निधनवि[18]भक्तिः—नौधसं प्रथमे, श्यैतं[19] द्वितीये, महावैष्टम्भं तृतीये, आथर्वणं चतुर्थे, बा[20]र्हद्गिरं पञ्चमे, गोष्ठं[21] षष्ठे।

अथै[22]षैडावि[23]भक्तिः—कालेयं प्रथमे, मा[24]धुच्छ[25]न्दसं द्वितीये, रौरवं तृतीये,

1 नवै ब्रा० C क. 2 न G1, G2, J. 3 मनेति। B. 4 J, K add तस्मा-दिति ०स्यैति G1, G2, J. 5 तायै० G1, G2, J. 6 ०त्ते B. 7 समूढाज्योतिनि० G1, G2, J. 8 अदने G1, G2, J. 9 य इति विणस्य व G1, G2, J. 10 पि is wanting in G1, G2 11 त्वच्छ्रियत C. 12 ०न्यचैवं G1, G2; ०न्त्रितैवं J. 13 एवामा० G1, G2. 14 ०रभ० B. 15 औषनं G1, G2, J. 16 स्तोमं J. 17 आन्वं G1, G2, J. 18 ०नभक्तिः B; ०नविभक्ति G1, G2, J. 19 श्येनं B, J. 20 बार्ह० G1, G2. 21 गौ० G2. 22 अथैवेडा C, J; अथेषेडा K. 23 ०डाभक्तिः B. 24 माध० J. 25 ०च्छ० G1, G2, J.

पृश्नि चतुर्थे, रायोवाजीयं पञ्चमे, गोष्ठ एव षष्ठे।" Agni. LŚ. 4. 5. 18.
अथैषं[1] छन्दोमेष्विडाविभक्तिः[2]—
जरायोधीयं सप्तमे।
इ[3]डानां सञ्चारोऽष्टमस्य सती नवमेऽहनि[4] क्रियते।
प्रतीचेनेडं[5] काशीतं नवमे।
उत्से[6]धो दशमे[7]।
अथ नौधसे वदति[8]—
'इन्द्रं[9] गीर्भिर्हवामहे' इति। RV. 8. 76. 5; PB. 11. 4. 4.
तत्खलु हवामह इत्येव कर्तव्यम्।
विधिः[10]प्रमाणात्[11]।
कथमयथाविधि कुर्यामिति।
आम्नायद्वैतेन ब्राह्मणमुपवर्[12]णयतीत्यपरम्।
तन्नियोगाय न प्रभवतीति।
एतेनैवै[13]तद् व्याख्यातम्—
'अक्रान्त्समुद्रः परमे[14] विधर्मन्[15]' इति। SV. 1. 529; 2. 603; RV. 9. 17. 40; PB. 15. 1. 1.
यानि चैवंजातीयानि—
यथाक्षरे[16] वदति—
"यः पुरा पुण्यो भूत्वा पश्चात् पापीयान् स्यादाक्षारं ब्रह्मसाम कुर्वीत" इति। PB. 11. 5. 11; LŚ. 10. 1. 13.
किं तस्य स्थाने स्यादिति।
एते एवान्[17]योन्यस्य स्थानं व्यतिहरेत्।
नौधसमुष्णिहि कुर्यादिति।
तदाहुः—व्यतिहरति चेद्यत्र बृहत्षोडशिसामं[18] स्याद् गौरीवितं नूनं द्वितीयस्याह्नः पृष्ठं कुर्यादिति।
अथ वै सञ्चारयेदिति[19]।

1 ०षां G. 2 ०ष्टाम० B; ०विक्ते G1, G2, J. 3 इल्याना० G1, G2; इल्वना० J. 4 G1, G2, J add किय इति. 5 ०नैडं G1. 6 उत्सोधो G1, G2; उत्सोधो J. 7 ०मः G1, G2, J, K. 8 वदन्ती G1, G2, J, K. 9 ई गी० G1, J; ईन्द्र गी० G2. 10 विधिः प्र० G1, G2, J. 11 ०णाः C, G1, G2, J, K. 12 G1, G2, J omit व. 13 ०नैव G1, G2, J, K. 14 मयने SV, RV but PB has परमे. 15 ०र्न्नेति. G1, G2, J, K. 16 ०क्षरे G1, G2. 17 वा० C ख, G1, G2, J, K. 18 सामा G1, G2, J. 19 ०येति G1, G2, J, K.

सञ्चारयति चेद्गौरीवितमेवानुष्टुभि कुर्यात्, गौरीवितꣳ षोडशिसामेति[1]।
अथ वै प्रतिनिदध्यादिति[2]।
प्रतिनिदधाति चेद्यत्र[3] बृहत्षोडशिसाम स्यात्, किं तत्र बृहत्सदृशं द्वितीयस्याह्नः पृष्ठं कुर्यादिति।
अथ कथꣳ स्यादिति।
सञ्चारयेदहः[4]।
नानाहःसु यानि सञ्चारिधर्माणि[5][6] स्युः प्रतिनिदध्यात्।
समानेऽहनि व्यतिहरेत्, यत्र व्यतिहारमभिरूपं मन्येत।
प्रतिनिधिष्विहाभिरूपतरम्[7][8]।
पौष्कलमुष्णिहि[9] कुर्यात्।
एतच्च ज्योतिष्टोमानां[10][11] द्व्याणां[12] दशरात्रे निहितं भवति।
अपिच पदनिधनꣳ राथन्तरेऽहनीति।
यज्ञायज्ञीयमग्निष्टोमसाम[13], यज्ञे यज्ञे कुरुतेति।
तदेवाभिवदति।
अथाप्येष तृतीयसवने सौमान्तस्तमदिदर्शयिषीत्[14][15] ॥ १० ॥
"अथ वैरूपे वदति—
'यथा मण्डूक आद् करोत्येवं निधनमुपयन्ति' इति। PB. 12. 4. 16.
कस्येदं ब्राह्मणꣳ स्यादिति।
कृता राथन्तरीडा[16] कृता बार्हतीति कौत्सः।
तदिदमकृतकारं ब्राह्मणमर्द्धं[17] ब्राह्मणꣳ स्यादिति।
पञ्चमे सेयं[18] प्रत्याहृता भवतीति गौतमः।
तां परोक्षीकृत्याभिव्याहरेयुः[19][20]।
एवं पञ्चमेऽहन्ययातयाम्ना भवतीति।
तदप्येवमिव[21] ब्राह्मणं भवति—'अयातयामतायै' इति। cp. PB. 12. 4. 16.

1 ०समेति० G1, G2; ०सनेति J. 2 ०त्रिति G1. 3 च० G1, G2, J, त० K. 4 चारये (ति सञ्चारयति चेद्गौरीवितमेवानुष्टुभि कुर्याद्गौरीवितꣳ षोडशिसमेति। अथ वै प्रतिनिदध्या किं) दह G1; चारयेदह G2, J. 5 ०ह्नास्व C. 6 ०धर्मिणि B. 7 ०निधिस्त्विहा० C; निस्त्विधिहा० G1, G2, J; ०निध्विस्त्विहा० K. 8 ०तरः C, G1, G2, J, K. 9 हि is wanting in G1, G2. 10 ज्यौ० C. 11 B adds अत्र. 12 ह्व्याणां G1. 13 ०ज्ञोनिम० G1, G2. 14 ०सवनꣳ सा० C; ०सवनसा० B, K. 15 ०मदी० B. 16 ०रीडाः G1, G2, J. 17 ०णार्द्धसाब्रा० B. 18 ०इयं C, G1, G2, J, K. 19 ०त्तल० G1, G2, J. 20 ०व्याहृ० G1, G2, J, K. 21 ०प्येतमि० B; ०वम Caland.

तत्र कः परोक्षीभाव इति ।
आकारटंकारौ[1] वा कुर्युरिकारेकारौ[2] वा ।
एवमेकवर्णविकारः[3] ।
इकारन्त्वेवोयिकारीकुर्युः[4] ।
एतस्मिन् परोक्षीभाव उपलभ्यत इति ।" Caland ibid.
पद्दैवतं[5] व्यत्यस्यति[6] ।
वैरूपे विरूपं[7]मचिकीर्षत् ।
अवर[8]मेवेदमहः सत् परमत्यस्तं[9] भवतीत्यपरम् ।
व्यत्यासे व्यत्यासं करिष्यामीति, स्तोत्रवशेनेति धानञ्जय्यः ।
यद्[10]व्यत्यस्यन् पद्[11]दैवतम् ।
यदा यत्प्रत्याहारयिष्यदिति[12] प्रत्यवेतं[13]स्तदा प्रतिहारोऽभविष्यत् ।
यद्यु[14] वै देवतायै बहिर्ऋचं प्रतिहारो[15]ऽभविष्यत् ।
अथैत[16]मनतिप्रत्याहृतो[17]ऽन्तर्ऋचं भवतीति ।
अथाप्यस्यै[18] छान्दसमध्यायं[19] विद्यमानमाहुः ।
"अथ[20] खल्वाह—'द्वादश वैरूपाणि भवन्ति ।' इति । PB. 12. 4. 17.
कस्येदं ब्राह्मणं स्या[21]दिति ।
संवत्सरब्राह्मणमित्याहुः ।
संवत्सरे द्वादशकृत्वो होतृषाम भवति ।" Caland ibid.
तस्येदं संवत्सरासि वदेदिति ॥ ११ ॥

अथ[22] प्रेमं[23] हिष्टीये वदति ।
हिंसितोऽन्वीक्षेत, यमिच्छेत् प्रसृज्यमानं न[24] प्रत्येयादिति ।
तम[25]नुगायेद् दक्षिणमक्षि[26] निकुञ्च्य सव्यं सक्थि [उद्][27]गृह्य[28] ।

1 ०रगकारौ B; ०र्ऽकारौ G1, G2, J, K. 2 ०र्युकारणकारौ G1, G2; ०रिकारणकारौ J, K. 3 ०रन्त्वे० G1, G2, J. 4 ०वाइका० B, K; ०वाईका० G1, G2, J. 5 पदादेवतं G1, G2, J. 6 स्यति is wanting in G1, G2. 7 B, K repeat रूप. 8 अपर० B; एवरामवेदमभ्यहः G1, G2; एवरामवेदमहः J. 9 परमभ्यस्तं C, K; परामभ्यस्तं G1, G2, J. 10 यदि व्यत्यस्मिन् B. 11 पदं दैवतान् B; यद० C. 12 ०ष्यदति C, G1, G2, J, K. 13 ०वेतहृथा C, G2, J, K; ०चेतसथा G1. 14 अद्यु B. 15 प्रतिभवि० G1, G2, J. 16 अत्यमनत० G1, G2; अत्यमनति० J. 17 ०हृतोर्कचं G1, G2, J; ०हृतोन्तर्कचं K. 18 ०स्यैवं छा० C, G1, G2, J, K. 19 ०मधसयं J. 20 अप्यथ C. 21 स्यादिति ... तस्येदं (line 19) is omitted by G1, G2, J. 22 अत्र B. 23 प्रथन० B; प्रथमं ये हिष्टी G1, G2, J. 24 Wanting in G1, G2, J, K. 25 ताम० G1. 26 दक्षिणमन्विति कुत्य सव्यं C; दक्षिति कुत्य सव्यं G1, G2, J. 27 उद् is omitted by B; द् is wanting in G1, G2, J, K. 28 ०गृह्य C.

अथा[1]यं न प्रत्येयादिति काकुभ उक्थ[2]प्रणयः पृष्ठच्छन्द[3]सोऽन्वभिवृद्धिः ।
"अथ स्वः[4]पृष्ठस्याङ्गिरसस्य निधनयोरानुपूर्व्ये विवदन्ते ।
स्वःपूर्वमिडोत्तरेत्येके ।
एवमेतयोः सामन्त[5]यो[6]रानुपूर्व्यं[7] भवति ।
इडां वयं पूर्वां कुर्मः[8] ।
एवमनयोः समानोपायादभिव्याहारं पश्यामः ।
यथा[9] रा[10]जने माधुच्छन्दस इति ।" Caland PB. 12. 9. 19.
अथ वैराजं ऽयनु[11]तोदमेके कुर्वन्ति ।
एवं[12] छान्दसोऽध्याय इति ।
चतुरनुतोदं वयम् ।
एवमा[13]चार्यवच इति ।
'तेन[14] वात्स[15]प्र[16]समादध्यात् ।' Dh. Dr. Ś. 40 b. 13.
"यदीदं ऽयनु[18]तोद[17] [ स्यात् ऽयनु[18]तोदं ] तत् ।
यदि[19] चतुरनु[20]तोदं चतुरनु[21]तोदं तत् ।" cp. Dh. Dr. Ś. 40 b. 13; 41 a. 1.
तदप्येवमिव ब्राह्मणं भवति—एतस्मिन् वै वैरा[22]जं प्रतिष्ठितमिति ।
अथ कतमे विष्टम्भा इति । cp. PB. 12. 10. 10.
देवता इत्याहुः ।
देवताभिः पदानि विष्टब्धा[23]नीति ।
तदाहुः—एकादशेमा[24] देवता दशकृत्वो विष्टभ्नोतीति ।
दशैताः सप्रा[25]या भवन्ति ।
अपि वा[26] य एते देवतान्तरेषु पदै[27]वैस्तोभास्तान् विष्टम्भानवोचत ।
तैर्देवता विष्टब्धा इति ।

---

1 अशा० G1, G2, J, K. 2 उक्थः प्र० C, G1, G2, J, उक्थ्यः प्र० K 3 ०च्छन्दोऽन्व० C, प ( ष G2, J ) छन्दोन्व० G1, G2, J, K. 4 स्वः is wanting in B. 5 ०न्तारयो० C, G1, G2, J. 6 ०रनु० G1, G2, J. 7 ०पूर्वं G1. 8 कूर्मः C, कुर्म्भ J, K. 9 अथा G1, G2. 10 ०जा० G1, G2. 11 ०नुतदे० B; ०नुनोद० G1, G2. 12 वं is wanting in G1, G2. 13 एव इति मार्य० G1, G2; चा is wanting in J. 14 तन G1, G2, J. 15 वाक प्र० G1. 16 ०तोतं B. 17 B, C omit the portion within brackets. 18 अनु० G1, G2, J, K. 19 यति G1, G3, J. 20 Wanting in C, K. 21 ०रा० G1, G2. 22 राजं C, G1, G2, J, K. 23 विष्टम्भानीति C; विष्टम्दानीति G1. 24 ०शमा G1, G2, J, K. 25 सत्यं प्रा० C, G1, G2, J, K. 26 ०पायेर्वै दे० B. 27 दशस्तो० C, G1, G2, J, K.

अथैतयोरक्षरयोर्विवदन्ते ।
"ऋगक्षरे स्तोभाक्षरे" इति ।
ऋगक्षर इति लामकायनः ।
तदभिव्याहारेण जानीमः—यादृशे इमे ऋगक्षरे तादृशे इमे भवत इति ।
अथाप्यादित्यसदृशं वैराजम् ।
यादृश इत आदित्यस्तादृशः परस्तात् ।
तद्रूपं दिदर्शयिषन् प्रथमे ऋगक्षरेऽन्त्याक्षरं परिहरति ।
अथाप्युच्चावचाः सामवृत्तयो भवन्ति ।
यथैतत् साम्न्युपेतानि पुरारब्धादीनि[12] ।
तन्न्यायं मन्यन्ते ।
स्तोभाक्षर इति धानञ्जय्यः ।
पश्यामैः खलु पदानुरूपान् स्तोभानृचोऽन्वयतः ।
यथैतज्जनद्वत्यामृचि जनद्वान् स्तोभोऽपि[18] ।
सिद्धमतो हि रात्तोमीषु ।
एवमिमे पीतवत्यामृचि पीतवती स्तोभाक्षरे भवत इति ।
अथाप्यादित्यसदृशं वैराजम् ।
यादृश इत आदित्यस्तादृशैः परस्तात् ।
तद्रूपं दिदर्शयिषन् पदानुरूपे स्तोभाक्षरेऽन्तं परिहरति ।
नो एतत् कंचन पश्यामः ।
प्रथमे ऋगक्षरेऽन्तं परिह्रियमाण इति ।
अथैषातिजगती भावप्रत्यये छन्दस्तोमैरोहमदिदर्शयिषीत् ।
विराजं वा वैराजेऽहन्यचिकीर्षीत्[28] ।

---

1 आथैत॰ J. 2 खेरा॰ J. 3 रूपं B. 4 ॰यिष्यन् B, G1, G2. 5 ॰रे अन्तं प॰ C; ॰रे अन्नं प॰ G1, G2, J, K. 6 अथायश्चा॰ G1, G2; अथापश्चा॰ K. 7 समावृ॰ B. 8 ॰चोयो G1, G2, J, K. 9 ॰थैकवत् C. 10 साम्युपे॰ C; साम्नुपे॰ G1, G2, K; साम्यूपे॰ J. 11 पुनरा॰ C. 12 ॰धानीति C, G1, G2, J, K. 13 नान्यां C; नान्यायं G1, G2, J, K. 14 मन्येत C, G1, G2, J, K. 15 पश्यामेः G1, G2, J. 16 ॰चोन्वयन्तः C, G1, G2, J, K. 17 ॰द॰ J. 18 ॰भोऽसिद्धवतोऽपि रा॰ C; ॰भ्योय (॰भोप G2, J) सिद्धवन्तोऽपि रा॰ G1, G2, J. 19 ॰र्शां G1, G2, J, K. 20 ॰दृशे B. 21 ॰यिषीत् B; दिदिदर्शयिन् G1, G2, J. 22 यदा॰ C, G1, G2. 23 ॰न्तरं B. 24 ॰त इवच G1, G2, J; ॰तद्वचनं K. 25 ॰भागप्रत्यये B; भागप्रत्यये K. 26 म is wanting in B, J, K. 27 ॰दर्शयिशेषीत् J. 28 ॰कीषत् B, G1, G2, J.

विरा[1]डियं पञ्चाश[2]दक्षरा, बृहत्यावुत्तरे, तेन बृहतीभ्योऽनपेतं भवती[3]त्यनपेतं भवतीति ॥ १२ ॥

न[4]वमः पटलः

अथैतासु महानाम्नीषु[5] विप्रतिपादयन्ति[6]—
इ[7]दं शाक्करमिदमशाक्करमिति ।
अशा[8]क्करी प्रथमा द्विपदा, शा[9]क्कराणि त्रीणि पराणि पदानि ।
धातुरशाक्करः पञ्चाक्षरः ।
स एष कृताकृतो भवति ।
वत्सोऽशाक्करोऽष्टाक्षरः ।
[ ऊधः[10] ] शाक्करमष्टाक्षरम् ।
अभ्यासवत् तस्यं त्र्यक्षरान् प[11]दादीन् प्रतिनोदा[12] इत्याचक्षते ।[13]
पुरुषोऽशाक्करः पञ्चाक्षरः, शाक्कराण्येव त्रीणि परा[14]णि पदानि ।
अभ्यासोऽशाक्करोऽष्टाक्षरः ।" Say. PB. 13. 4. 2.
तस्य प्रस्ताव[15]यति, न प्रतिहारयति[16] ।
एतेनैवोत्तर[17]योः शाक्कर[18]णि चाशाक्कराणि [च[19]] व्याख्याता[20]नि ।
त्र्यभ्यासोत्तमा[21] श[22]क्करी भवति ।
अभ्यासा[23]ः किमर्था इति ।
लोकोक्ताः श[24]क्कर्यः साभ्यासा इमे लोका भवन्ति ।
अग्निर्वायुरिति पूर्वयोः ।
आदित्यश्चन्द्रमा इत्युत्तर[25]स्य ।
तस्माद् त्र्यभ्यासोत्तमा शक्करी भवति ।
अथ खल्वाह—"त्र्य[26]ोपशाः संस्तुता भवन्ति" इति । PB. 13. 4. 3.
कस्येदं ब्राह्मणं स्यादिति ।
उत्तमाया त्र्य[27]भ्यासाया इत्याहुः ।

---

1 विराजडियं G1, G2, J. 2 पञ्चादशद० B; पंचाबराक्षरा G1; पञ्चादशक्षरा G2, J; पञ्चादशाक्षरा K. 3 ०भवतीत्यमपेतं G1, G2, J. 4 In B only. 5 ०म्नीसु G1, G2, J. 6 ०न्ती C. 7 दशाक्षरमिदम० C. 8 श० B. 9 Wanting in B 10 तस्य G1. 11 पादा० C. 12 प्रतीतोदा C, G1, G2, J; प्रती० K. 13 S omits this line. 14 Wanting in C. 15 ०तावयती K. 16 ०हारयेति K. 17 ०रायो G1. 18 ०रा G1, G2. 19 B omits च. 20 ०ख्यानि G1, G2. 21 ०मात्तमा G1. 22 ०शा० C, G2, J; साकरी G1. 23 ०सा C; ०स० कि० G1, G2, J; ०सं कि० K. 24 शा० C, G1, G2, J. 25 ०त्तमस्य C, J, K. 26 भ्योपशाः C. 27 त्र्या० G1.

एकाध्यासे पूर्वे[1] द्व्यध्यासोत्तमा ।
तस्यां[2] इदमभिनन्दं[3] ब्राह्मणं वदेदिति ।
अपि वा समस्तब्राह्मणमेव स्याद् ।
द्व्योपशे[4] पूर्वे[5] द्व्योर्पशोत्तमेति[6] ।
ऊधसोऽभ्यासब्राह्मणं मन्य इति वार्षगण्यः ।
एवमिव ब्राह्मणं भवति—"इडे[7]ऽभितोऽथकारं तस्माच्छृङ्गे तीक्ष्णीयसी[8] स्तूपात्[9] ।" इति । PB. 13. 4. 4.
उपशोकानि[10] शृङ्गाणि भवन्तीति ।
अथ खल्वाह—"दिशः[11] पञ्चपदा[12] दाधार[13] ऋतून् षट्पदा छन्दांसि[14] सप्तपदा पुरुषं द्विपदा[15]" इति । PB. 13. 4. 2.
"प्रतिलोमं वदन्ति[16] ।
पादतश्छिद्रोहो[17] भविष्यतीति ।
सप्तपदा प्रथमा शक्वरी, षट्पदा द्वितीया ।
यद्धि[18] प्रथमाया उत्तमं[19] पदं तद् द्वितीयायाः प्रथमम् ।
प्रगाथः सानु[20]पृष्ठ[21]मिति पञ्चपदोत्तमा ।
यद्[22] द्वितीयाया उत्तमं तत् तृतीयायाः[23] प्रथमं च द्वितीयं च ।" Say. ibid.
नवपदाः पुरा बभूवुरिति लामकायनः ।
ताभ्यो[24] रेवत्यो[25] निर्मिताः ।
द्वे प्रथमायाः पदे, त्रीणि द्वितीयायाः, चत्वारि तृतीयायाः ।
तदप्येवमिव ब्राह्मणं भवति—"सिमाभ्यो[26] ह्यधिरेवत्यः प्रजायन्ते ।" इति । PB. 13. 9. 4.
नवपदा एव भविष्यन्तीति, ऊधश्चाभ्यस्यंति[27] पदं चानुसंहरति ।
अथापि नवपदा एवाभिरूपतरा[28] न विपर्यये[29] त्रिणव इति ॥ १२ ॥

---

1 पूर्वे द्व्यध्यासो is wanting in G1, G2. 2 तस्या G1, G2, J. 3 ०नन्दां B; ०नन्दा G1, G2, J, K. 4 Wanting in C; ०पदेशे G1, G2, J, K. 5 Wanting in C. 6 ०व्योप० C; द्व्योपदेशो० K. 7 इमडे० G1, G2. 8 ऽतितिष्णयसि B. 9 ०त्यात् C. 10 ०शौका० G1. 11 दश B. 12 पञ्चदा B. 13 दाधार is wanting in B. 14 ०दांऽस्ति C; ०दऽसि G1. 15 ०पदेऽपि । G1, G2. 16 वदति Cक; भवति Cख, G1, G2, J, K. 17 पादत० G1, G2, J. 18 यादि G1; यादि G2, J, K. 19 उत्तमं पदं ··· द्वितीयाया ( line 16 ) is wanting in K. 20 साधु० B. G1, G2, J. 21 ०ष्ठा० G1, G2. 22 अय B; य G1, G2, J. 23 द्वितीयायाः B. 24 ताभ्या G1, G2, J. 25 ०वत्या G1, G2, J. 26 समा० B. 27 ०स्य C, G1, G2, K; स्यति is wanting in J. 28 ०रूपन्तादनरा G1, G2, पान्तदरा J. 29 ०र्यायोऽहिरूण० B; ०र्ययेति त्रि० G1, G2, J, K.

# अथ चतुर्थः प्रपाठकः

अथ खल्वाह—"गायत्रमयनं भवति, त्रैष्टुभमयनं भवति, जागतमयनं भवति[2] ।" cp. PB. 13. 4. 10

किमयनꣳ स्यादिति ।

ऊधसि विकारो दृष्ट[3] इति[4] गौतमधानञ्जय्यौ ।

[यें][5] एष[6] मध्य ऊधसोऽथकारस्तꣳ स्वरिति कुर्यात् ।

तद्गायत्रमयनम् ।

अथेति त्रैष्टुभम् ।

इडेति जागतम् ।

तदाहुः—विकृतौ[7]ऽथकारः, अविकृतस्य को विकारः, यें[8] एवाभित इडे[9] ते विकुर्यादिति ।

सर्वमेवोर्ध्व[10]विकारार्थमागच्छतीत्यपरम् ।

सर्वमेवोर्ध्वविकुर्यादिति ।

अथाप्याहुः—अविकृतमेवोधः स्यात्, अन्त्येडां[11]मेव विकुर्यात्[12], अन्त्यान्यानि कर्माणीति ।

अथा[13]प्याहुः—अविकृतैवान्त्येडा स्यात्, यदेवं[14] प्रागन्त्येडायास्तद्विकुर्यात्, तद्व्ययनं भवतीति ।

ते[15] कस्य हेतोर्जागतमयनꣳ समारप्स्यन्तीति[16] ।

नेदं[17] जागतमिति शाण्डिल्यायनः ।

---

1 In C only. 2 ॰नीति C, G1, G2, J, K. 3 दृष्म G1, G2, J. 4 ति is wanting in G1, G2. 5 Wanting in B. 6 ए is wanting in G1, G2, J. 7 ॰र्वितो यथाकारः G1, G2; वि-तोपथोकोरः J. 8 ये चाभि॰ C; यो वाभि॰ G1, G2, J; ये वाभि॰ K. 9 ॰डेति वि॰ C, G1, G2. 10 ॰धपुका॰ B. 11 अन्तेडा॰ G1, G2. 12 कुर्यादन्ता॰ C; कुर्याकस्यदन्ता॰ G1, G2, J, K. 13 अथापार वि॰ G1; अथाप्यार वि॰ G2. 14 ॰वं G1, G2, J, K. 15 एकस्य हे॰ G1, G2, J, K. 16 ॰न्तेति C, G1, G2, J, K. 17 तदिदं B.

यानि त्वत्र[1] निधनानि तानि स्वरिति कुर्यात् ।
तद् गायत्रमयनम् ।
अथेति[2] त्रैष्टुभम् ।
इडेति जागतम् ।
अथेदं मिश्रनिधनꣳ सर्वाभिप्रायम्[3]—
यथेदमधीमह इति ।
ऊर्ध्वꣳ शक्करीभ्यः पञ्च[4] पुरीषपदानि पञ्चाक्षराणि, तेभ्यः प्रस्तावयति, न प्रतिहारयति, न शाश्वदेकेऽभ्यासपुरीषपदानां प्रस्तावयन्ति प्रतिहारो[5]पायान् प्रस्तावोपेयादिति ।
प्रस्तावयामो वयम्[6] ।
अन्यदिदꣳ शक्करीभ्यः ।
तत्कथमप्रस्तुतं[7] क्रियेतेति[8] ।
सꣳरोधात्तु नूनं[9] प्रतिहारोपायात् ।
ते खल्विमे बहवः प्रस्तावाः ।
कथमोङ्कार इति ।
प्रस्तावनिमित्त ओङ्कार इत्येके ।
प्रस्तावे प्रस्ताव ओङ्कारेणाददीत ।
अथाप्याह—रसो वा एष साम्नां[10] यदोङ्कारः[11] ।
नैतेनातिरेकोऽस्तीति ।
प्रथम एव प्रस्ताव इत्यपरम्[12] ।
स्तोत्रीयाया एतान्यङ्गानि भवन्ति ।
सꣳकृत्तं[13][14] खलु स्तोत्रीयाया ओङ्कारो भवति ।
अथापि परिचष्ट ऊर्ध्वं प्रतिहारादोङ्कारेणादानम् ।
अथाप्येवमन्यैः सामभिः समाधिरिति ॥ १ ॥
ते खलु शाश्वदेके पुरीषपदैः[15] प्रतिपद्यन्ते ।
पञ्चविधेन पञ्चमस्याह्नः पृष्ठं प्रतिपत्स्यामह इति ।
अथाप्येवꣳ शक्कर्यवसानꣳ स्तोत्रं भविष्यतीति ।
अथाप्याह—"गोष्ठः पुरीषम्[16]" इति कृत्वा वै गोष्ठं पशूनुपाकुर्वन्ति । PB. 13. 4. 13.

---

1 वत्र G1, G2, J. 2 ०थेति C. 3 Wanting in G1, G2. 4 ०ञ्च० B. 5 ०हारा० B. 6 ०याम् G1, G2, J. 7 कथं प्र० B; कथमस्तु० G1, G2, J, K. 8 क्रियेयेतेति G1, G2. 9 नू प्र नं G1, G2, J. 10 साम्नां G1, G2. 11 यदोङ्का० G1. 12 ०रः C. 13 G1, G2, J add स. 14 सकृन्तु C, G1, G2, J. 15 ०पादैः G1, G2, J. 16 ०ष B.

अन्ततो वयं कुर्मः ।
एवं च छान्दसोऽध्यायः ।
अपि चैवं[1] पञ्चविधं पञ्चमस्याह्नः[2] पृष्ठमनुसं[3]स्थास्येत[4] इति ।
यद्वेतद् गोष्ठैः पुरीषमिति, इष्ट्वा[5] वै[6] पशून् गोष्ठं कुर्वन्ति ।
अथापि[7] पश्चार्धसेविपुरीषमिति ।
तत्खलु सर्वाभिः सह स्यादित्याहुः ।
तृचदृष्टय इमा भवन्ति लोकदृष्टयः ।
तदिदमन्तेऽनुषक्तस्थाने समाम्नातं भवति ।
अथाप्येवं सर्वास्वस्य[8] पुरीषा भविष्यन्तीति ।
व्यवायश्चाभविष्यदतिगुरु[9] च ।
[ अथ वै विष्टावान्तेषु विष्टावसमाधय[10] इति ।
व्यवायश्चैव गुरू च । ][11]
अथ वै पर्यायान्तेषु[12] पर्यायसमाधय[13] इति ।
व्यवायश्चैव गुरू च ।
अथ वो[14] उत्तमामेवानुचरेत् ।
एतया हि सहोत्पन्नं[15] भवतीति ।
व्यवायश्चैव गुरू च ।
सकृदन्ततः स्यादित्याहुः ।
एतच्चासां[16] लाघिष्ठम् ।
अपि चैवमव्यवायः[17] ।
अथापि परिनिष्ठायाशिषमुदित्वान्तेऽनुज्ञां वदिष्याम इति ।
अथापि पश्चार्धसेविपुरीषमिति[18], तासां धर्मो नियुज्यते—
न व्याहरेत्, नाश्नीयात्[19], अभिनद्धाक्षं[20] आसीत ।
प्रवेको[21]ऽयं ब्रह्मणो[22] भवति[23] ।
तन्नो ह प्रतिलभ्य प्रदेहेत्[24] ।
एतमेवाहं ब्रह्मचर्यं[25] धर्मेषु[26] मन्य इति गौतमः ।

1 वैवं G1, G2, J. 2 षष्ठम० G1; षष्ठः म० G2, J. 3 ०ष्यत इति । C, ०स्यति । G1, G2; ०स्य इति । J, K. 4 ०ष्ठमपु० B. 5 इष्वा B; इष्ट्री G1, G2; ताष्ट्री J. 6 B adds व. 7 अपि G1, G2. 8 सर्वाः सपुरीषा भ० C; सर्वास्व पुरीषो भ० G1, G2, J, K. 9 ०रु C, G1, G2, J 10 ०साधय G1, G2, J. 11 अथ ··· च wanting in B. 12 ०न्ते G1, G2, J. 13 ०सामाधाय G1, G2. 14 या B. 15 ०त्पन्नत्र० G1, G2, J. 16 ०त सां G1; ०त-सां G2, J; एतश्चासां K. 17 चैव व्य० G1, G2. 18 ०र्वासावि० K. 19 नासीतयाया B. 20 ०द्धाक्षत्वासीत C; ०द्धाक्षि असीत G1, G2. 21 प्रवे० C. 22 ना० B. 23 ०न्ति G2, J. 24 ०देहेत G1, K 25 ०र्यं० C. 26 धर्मं C, G1, G2, J, K.

तस्यै[1]तिगुरु वाभविष्यत्।
अपि च नो[2] ह मरणाशङ्कमिमास्तु स[3]र्वच्छन्दस्या भवन्ति।
आसा[4]मेव चरतः सर्वच्छन्दसामिव व्रतं चरितं भविष्यतीति।
अथाप्याहुः—यानि रूपाणि ब्रह्मचारी न पश्यति, यान्[5] रसान्नाश्नाति,
ल[6]ब्ध्वा हैनान् समावृ[7]त्य भवति।
तमेतद्रूपेभ्यश्च रसे[8]भ्यश्च समव[9]रुन्धन् मन्यत इति ॥ २ ॥
तासां खलु त्रीन् संवत्सरान् ब्रह्मचर्यं चरेत्।
कृष्णव[10]स्त्रः कृष्णभक्ष आचार्याधीन[11]स्तपस्वी तिष्ठेद्दि[12]वासीत नक्तम्।
सायं प्रातरुदकोपस्पर्शी सर्वभूतेभ्यः पन्थानमे[13]व दद्द्यति।
शरणां नातीयात्।
नित्यं स्नि[14]ग्धवासा शु[15]भूषेत्।
उदर्के[16]साधवो हि महानाम्न्य इति।
एवं खलु[17] चरतः कामवर्षी पर्जन्यो भवति।
उदकोपस्पर्शनं[18] किमर्थमिति।
अ[19]र्भुक्ताः शक्वर्य[20]स्ता एव प्रविशन् मन्यत इति।
अपि वा पशूनामे[21]वै पायनार्थं[22] स्या[23]त्, पशूकाः शा[24]क्वर्य इति।
स[25] खलु प्रथमां स्तोत्रीयामनुगा[26]प्याहोरात्रे वाग्यतः परिणद्धाक्ष आ[27]सित्वा
तस्या[28] संवत्सरं ब्रह्मच[29]र्यं चरेत्।
एवमेव द्वितीयायाः।
एवं तृतीयायाः।
ते खलु शक्व[30]र्यके प्रथमत एव परिणह्यन्ति।
प्रथमन्ते[31] एव यथा न प्रध[32]क्ष्यतीति।
अभ्यासं प्रत्येके।

1 तस्येऽति॰ G1, G2, J, K. 2 नोहं रणाशङ्कमिमाः B; ॰मिमस्तु C. 3 स्वसर्व॰ B; सर्व॰ G1, G2, J, K. 4 ॰सां मे C, G1, G2. 5 तान्यासन्ना॰ C; तान् G1, G2, J, K. 6 लब्धा B, G1. 7 ॰इ॰ G1, G2. 8 Wanting in K. 9 समत्वकुल B; ससव॰ J. 10 Wanting in G1. 11 ॰नत॰ G1, G2, J. 12 ॰दिवा॰ G1, G2. 13 ॰मान्दयद B; ॰मददृद्र॰ G1. 14 सन्दिग्ध॰ B. 15 क्षुभू॰ G1. 16 ॰के सा॰ G1, G2, 17 G1, G2, J add ह. 18 ॰नी G1, G2. 19 भनुक्ताः C, G1, G2, J, K. 20 ॰र्य इति खस्ता G1, G2. 21 ॰मे G1, G2. 22 ॰सार्थं K. 23 G1, G2, J add पशूर्थं. 24 शा॰ G1, G2. 25 Wanting in C, J, K. 26 ॰गाया॰ C; ॰गाप्या॰ G1, G2, J. 27 असि॰ G1, G2, J. 28 ॰स्याः B, C. 29 ॰चर्यं C. 30 शक्वादते G1, G2, J; ॰देते K. 31 ॰मन्त B. 32 प्रवक्ष्य॰ C, G1, G2, J, K.

अभ्यासं प्रत्यभ्यसिष्यामह[1] इति ।

अपि[2] तं[3] प्रातरभिवीक्षयन्ति, योऽन्यं[4] प्रधक्षन्तं मन्यन्ते, योऽग्निं वत्समादित्यम् ।

अपोऽभि[5]व्यख्यमित्यपः ।

ज्योतिरभिव्यख्यमित्यग्निम् ।

पशूनभिव्यख्यमिति वत्सम् ।

स्वरभिव्यख्यमित्यादित्यम्[6] ।

अथाप्येतं[7]द्दिवैवैता भवन्ति ।

आप इवाग्निरिव वत्स इवादित्य इवेति ।

अथ खल्वाह—"पार्थुरश्मं[8] राजन्याय ब्रह्मसाम कुर्यात्, वार्हद्गिरं ब्राह्मणाय, रायोवाजीयं वैश्याय[9]" इति । PB. 13. 4. 18

पार्थुरश्मं[10] चेद् ब्रह्मसाम स्यात्, वार्हद्गिरस्यैतं[11]द्दत्तु कुर्यात् ।

यद्यु वै रायोवाजीयमेते[12] वार्हद्गिररायोवाजीये, स स्तोत्रीयेऽन्योन्यस्य स्थानं व्यतिहरेत् ।

कथमुभयेषु[13] समवेयत्[14]स्विति ।

भूम्नो[15] वंशं[16] नयेद्, गृहपतेरित्येके ।

अपि [ वा[17] ] वार्हद्गिरमेव कुर्यात् ।

नित्यं च श्रेष्ठ[18]वर्णीयं चेति ।

वैश्वामित्रस्तोत्रीये षोडशिना स्तूयमान आष्टमिकमुक्थ्यं[19]स्तोत्रीयं प्रतिनिदध्यात्, असंज्ञाराय[20] वीङ्कस्तोत्रीये वसिष्ठस्य प्रियमनुकल्पयेद् वसिष्ठस्य प्रियमनुकल्पयेत् ॥ ३ ॥

दशमः[21] पटलः

अथ षष्ठेऽहनि "रेवतीषु वारवन्तीयं पृष्ठं भवति ।" PB. 13. 10. 4.

तदेके प्रत्यक्षं ब्रुवते ।

एतत् प्रकृतौ दृष्टं भवतीति ।

अथापि यद्रेवत्यः पृष्ठं[22]मभविष्यन्[23] पवमान आसां धर्ममकरिष्यन्निति[24] ।

---

1 ०भ्या B; ०भ्याम G1, G2, J, K. 2 अपि is wanting in G1. 3 च B. 4 यान्य प्रधक्षं० B; यान्य प्रवक्ष्यं C. 5 पवोभि० B; आयाभि० G1, G2, J. 6 न्। अथाप्येतद्दिवैवैता is wanting in G1, G2, J, K. 7 ०त्तानि B. 8 पार्थ० B. 9 इया is wanting G1, G2, J. 10 पार्थं० B, G1, G2, J 11 ०स्यैवर्धुं C 12 C, G1, G2, J, K add एव. 13 ०ये G1, G2, J. 14 समावयस्थिनि G1, G2, समावयत्स्थिति J. 15 भुम्नो C. 16 वधूशं G1, G2, J, K. 17 Wanting in B. 18 G1, G2 omit श्रेष्ठ. 19 ०मुक्थ० C, K. 20 संज्ञा० C. 21 In B only ( here ends the 1st daśati of the Paṭalas ). 22 पृष्ठः मा भ० G1, G2. 23 ०भ्यत् C, G1. 24 ०भ्यदिति B, K.

अथाप्य[1]नुरू[2]पाग्निष्टोमसाम्नि वारवन्तीयस्यै[3]वानुरूपं कल्पयतीति।
रेवत्य इत्यौर्ध्व[4]क्षीरेवतीषष्ठानां स्तुतिब्राह्मणं भवति।
तासां धर्मो नियुज्यते—"तद् गवां घोषोऽन्वसृज्यत।" इति। PB. 7. 8. 13; Dh. Dr. Ś. 6. 1. 6.
अथापि प्रतिपद्भिः पृष्ठानि संवर्णयन्[5] रेवतीरेवाभिसंवर्णयति षष्ठे[6] च विश्वजिति च।
अथापि पृष्ठ[7]स्तोमात् पृष्ठानि च्यावयन् रेवतीरपि च्यावयति।
अथाप्यनुगृहीतपृष्ठ[8] रेवतीरेवानुगृह्णातीति।
अथापि परोक्ष[9]पृष्ठोपा[10]न्त्यपृष्ठयोरनुगृहीतपरोक्ष[11] इति वारवन्तीयमेवानुगृह्णाति।
यद्वेतदेतत् प्रकृतौ दृष्टं भवतीति, ब्राह्मणेनैव कारणं वदेति।
यद्वेतत् पवमान आसां धर्ममकरिष्यन्निति, उपास्तं[12] पृष्ठत्वं स्तोत्रीयेण मन्यते[13]।
यद्वेतद् वारवन्तीयस्यैवानुरूपं कल्पयतीति[14], उक्तं वारवन्तीयस्य परोक्षम्।
तदेतद् रेवतीपरोक्षमेव भवतीति ॥ ४ ॥
अथ खल्वाह—"प्रायणतो द्विपदाः कार्या३ उदयनता३ इति।" PB. 13 12. 1.
कथं प्रायणतः स्युरिति।
प्रथमेऽहनीत्याहुः।
ऐ[15]तद्धि प्रायणं भवति।
अथापि दृश्यते प्रायणीयस्यो[16]क्थ्यत्वं यथा[17] चतुर्विंशस्य।
तथा षष्ठस्याग्निष्टोम्यं यथाभिप्लवि[18]कस्येति।
द्वितीय इत्यपर[19]म्।
एतदुक्थानां प्रायणं भवति।
अथाप्येवमुक्थव्यतिहारः सिध्यति।
अथाप्येवं प्रकृतिसविधतरं भवतीति।
"क[20]थमावृत्ते पृष्ठ्ये संस्थाधर्मा" इति। Ārṣ. K. V. 44 a.

---

1 ०प्या० C. 2 रू is wanting in G1, G2, J, K 3 ०स्यानु० B. 4 ०द्राक्षी० G1, G2, J, K. 5 ०यन नेवती० G1, G2, J, K. 6 षष्ठी J. 7 पृष्ठा० C. 8 ०तपृष्ठे G1, G2 J. 9 क्ष्य for क्ष in G1, G2. 10 ०पाक्त्य C, G1, G2, J, K. 11 Wanting in G1, G2. 12 उपास्तं B. 13 ०न्यत् K. 14 ०यन्तीति B. 15 एव त० G1, G2, J, K. 16 ०क्थ्यत्वं G1, G2, J, K. 17 Wanting in C. 18 ०क C; इति is wanting in G1, G2, J, K. 19 ०राम् G1, G2, J. 20 कतमा० C; कथमाहस्ते G1, G2, J.

आवृत्तस्याप्यन्त एव स्युरित्येके—यदा षडहः सन्तिष्ठत इति हि भवतीति ।
अथापि षडहधर्मा इत्याचक्षते ।
नचैतत् षष्ठस्य साधीयो[1] यथो च प्रथमस्य ।
"त्रयस्त्रिंशस्य त्वेव संस्थायामित्याचार्यैः[2] ।" Ārṣ. K. V. 44 a.
सं[3] एतदावृत्तेरवयवः[4] ।
य इत उपक्रमधर्मः स परस्तात् संस्थाधर्मः ।
यः परस्तात् संस्थाधर्मः[5] स इत उपक्रमधर्म इति ।
अथापि य एतानावृत्तस्यान्तं परिहरेत् सर्वाण्येव नूनं सोऽन्तलक्षणान्या[6]वृत्तस्यान्तं परिहरेदिति ॥ ५ ॥

त्रीणि दशरात्रस्य विच्छिन्नानीति शाण्डिल्यः ।
पञ्चममभितो द्वे, षष्ठादूर्ध्वमेकम्[7] ।
तेषां सन्तानाय सन्तनीति[8] ।
अनुपूर्वं[9] "सूक्तानुरूपांश्छन्दोमान् करोति" पृष्ठ्यंच्छन्दोमानामकृतकाराय । Ārṣ. K. V. 28 b.
अथाप्येकृताः[10] ।
[ अतः[11] ] प्राक् सूक्तानुरूपतेति[12] ।
अथापि प्रजापतिसंस्तावेषु[13] प्रजास्थानमभ्यवर्द्धयिषीत्[14] ।
"बृहद्रथन्तरे पृष्ठे[15]" नहि षाडहिकान्यनुभवन्ति । Ārṣ. K. V. 28 b.
नो व्यलुलुप्सीत्[16] ।
अथापि शिथिलोक्ता
तेषां प्रत्यक्षाभ्यां पृष्ठाभ्यां दृढीभावो भविष्यतीति ।
अथापि तम उक्ताः ।
ते एते ज्योतिषी[17] साम्नाम्[18] ।
स कस्य हेतोः ।
बृहत्पूर्वं युक्त इति ।
कृतयोः क्रियमाणयोरेषा कृताकृतिः[19] ।
अथापि स्तोमं[20] प्रत्यवाये पृष्ठतो रोहमदिदर्शयिषीत् ।

1 साधियो C; साध्ययो G1, G2, J, K. 2 ०र्यः B. 3 Wanting in C, G1, G2, J, K. 4 ०दावृत्ते रूपम् C, K; ०दारुपवृत्तै ( त्ते J ) रूपम् G1, G2, J. 5 ०र्मैः B. 6 सोक्षोषणन्यावृस्यान्तं B; सोन्तलक्षणां न्या० G1, G2. 7 षष्ठे पूर्वमेकम् Ck. 8 ०नी B. 9 पृष्ठ० G1, G2, पृष्ठयः छ० K. 10 ०प्यप्रकृतवादः C. 11 Wanting in B, C. 12 ०पयतेति C; ०पत्येति G1. 13 प्रजापयति० C; प्रजाति० G1, G2, J, K. 14 ०यिष्यन् B. 15 षष्ठे J. 16 व्यलोलु० B. 17 ०षि B. 18 ०म्ना B. 19 कृत० C, G1, G2, J. 20 ०मः प्र० G1.

व[1]र्ष्मोक्तिं बृहदिति ।

अथापीदं [2]बृंतस्थानं बृहदासितया [3]बृंतस्य मानसंतया ते व्य[4]त्यासं प्रयुङ्क्ते । तत् कुशलं धाङ्क्षिधनानि मा[6]ध्यन्दिना[7]न्यान्यैडा[8]न्यर्[9]भवान्त्यानि सवनच्छन्दसोरनुग्रहाय ॥ ६ ॥

"अर्कपृष्ठान् पै[10]ङ्गिनोऽधीयते[11]" ।

सै[12]षां छन्दोमानां पृष्ठ[13]भक्तिः ।

तेषां पृष्ठत्वे तिष्ठमानो[14] न साक्षात् करोति ।

बृहद्रथन्तरे [15]वा निकामयमानः पूर्वा[16]वा[ ]र्भवे करोति ।

एवं नेदीयसी पृष्ठानाम् ।

'सप्तमेऽहनि[17] कृताकृतो भवत्यब्रा[18]ह्मणविहितत्वा[19]त् ।' Say. PB. 14. 5. 12; cp. Dh. Dr, Ś. 9. 3. 4.

कर्तव्य इत्याचार्यैः[20] ।

छन्दोमानां चा[21]र्कसमाधिः ।

यथा चैतत्[22] "[23]पैङ्गिनोऽधीयते छन्दोगाश्चाप्येनमेकेऽधीयते[24] ।" Caland PB. 14. 5. 12.

अथापि सꣳरोधेऽनुगृह्यते, यथा त्रिवृति दशरात्र इति ।

नवमेऽहनि समे स्तोमे सति साध्यासां[25] बृहतीं करोति ।

कस्य हेतोरिति ।

साध्यासा पूर्वेऽहनि कृता ।

स एव[26]म्प्रत्यवायः ।

अथापि वह्नियं चरति ।

तस्याः पश्यता[27]मपिपादयिषीत् ।

दाशरात्रिकाणां[28] द्रव्याणां पश्या[29]ख्या ।

[30]अथाप्येतस्यामेवैतꣳ सामयोगꣳ साधीयो[31] ह्यश्नुत इति ।

1 वर्ष्यो॰ C, G1, G2, J, K. 2 वृ॰ C, G1, G2, J. 3 वृ॰ G1. 4 ॰सता B; ॰सं तथा G1, G2, J, K. 5 वृत्यासं G1; मत्यासं G2, J, K. 6 ॰मादितान्त्यार्भ॰ J. 7 ॰मान्यन्त्या॰ C. 8 ॰न्त्या॰ B. 9 ॰क्षानि K. 10 पै॰ C, G1, G2, J, नैगिनो॰ K. 11 ॰न्ते G1, G2, J, K. 12 ॰षां J. 13 ॰विभ॰ Caland. 14 ॰नो (?) Caland. 15 वा (?) Caland. 16 ॰चाभवे C, G1, G2, K; Caland suggests here पूर्वास्त्वार्भवे. 17 ॰न्यर्कः कृ॰ S. 18 ॰अ॰ J. 19 ॰त्वा C, G1, G2. 20 ॰र्यः G1, G2, J, K. 21 चर्क॰ G1, G2, J. 22 चैतान् C. 23 पै॰ C, G1, G2; नैगिनो॰ K. 24 ॰क धी॰ G1, G2, J, K. 25 साध्यानां K. 26 ॰वम प्रत्ययवा॰ C; ॰वं प्रत्यवा॰ B. 27 पर्थतमापि॰ B; ॰मापि॰ C, ॰मापिदयितीव् G1, G2, J. 28 B adds धर्माणां. 29 पार्श्वाख्या B; ॰ख्यातं G1, G2, J. 30 अ is wanting in G1, G2, J. 31 ॰योभ्यश्नुत C, K; ॰योन्नुत G1, G2; ॰योभ्युत J.

त्रैककुभस्य निधने विवदन्ते ।
पदनिधनं[1]मित्येके ।
यादृशे इमे ऋगक्षरे तादृशे इमे भवत इति ।
वह्निर्णिधनमित्यपरम् ।
वह्निर्णिधनस्थाने च युज्यते ।
अपि चास्य निधनवादो भवति ।
वह्निर्णिधनानामुत निधनवादा भवन्ति[2] ।
अथाप्यापद्यते[3] ज्योतिर्विचारात् ।
यत् पदनिधनमभविष्यद्[4]त्यरेक्ष्यत ज्योतिष्टोमीं मात्राम्, नास्यै[5] प्रतिनिष्कारं[6] कल्पयति[7] वह्निर्णिधनस्येव सत इति सत इति ॥ ७ ॥

प्रथमः[8] पटलः

अथ दशमेऽहनि चतुर्ऋचꣳ होतृराज्यꣳ समामनामः ।
तस्य मध्यमे भवतः—तानूनपाती[9] च नाराशꣳसी च ।
द्वयानि कुलानि भवन्ति—तानूनपातीनि[10] च नाराशꣳसीनि च ।
तानूनपातीं[11] तानूनपातेषु कुर्यात्, नाराशꣳसीं नाराशꣳसेषु ।
वसिष्ठशुनका अत्रयश्च वाध्र्यश्वाश्च[12] कण्वाश्च सङ्कृतयश्चैतानि नाराशꣳसानि । cp. LŚ. 6. 4. 13.

अथेतराणि तानूनपातीनीति ।
कथमुभयेषु[13] समवयत्स्विति ।
भूम्नो[14] वशं नयेत्, गृहपते[15]रित्येके ।
अपि वा तानूनपातीमेव कुर्यात् ।
एषा भूयिष्ठानां कुलानां भवति ।
अपि चैतामेवैकेऽधीयते ।
अथाप्येषा समारब्धतरा भवतीति ।
अथ मानसम् ।
दशमस्य भवती ३ सर्वस्यां[16]हो एव दशरात्रस्येति ।

---

1 ०धनानामि० C. 2 ०न्तीति C, G1, G2, J, K. 3 ०वद्येते G1; ०पद्येते G2, J, K. 4 ०ष्यद् यत् परे० C, ०ष्यद् यत् परोक्ष्य० G1, G2, J, K. 5 न्यस्य B. 6 प्रतिष्का० B. 7 J adds नास्य. 8 In B only. 9 G1, G2, J omit तानूनपाती ⋯ नाराशꣳसीनि च (line 14). 10 तानूनपातीनि ⋯ च wanting in C. 11 ०निं B; ०नें C. 12 वध्र्यश्वाश्च० C, G1, G2, J. 13 ०ष्वस० B, J. 14 भूम्नो C. 15 ०पतिरि० G1, G2, J. 16 ०हौ G1, G2, J, K.

दशमस्येत्याहुः—
नैनं[1] दशमेनाह्ना विप्रयुज्यमानं पश्यामः ।
अथापि दशमधर्मा इत्याचक्षते ।
अथापि सार्द्ध[2] मानसेन[3] विराडनुष्टुप्सम्पत्तिसिध्यति[4] ।
अथाप्याहुः—सर्वमेवेदमहः पुरा मानसं[5] बभूव ।
तद्[6]तिगुर्विति ।
वाचꣳ समापादयाञ्चक्रुरेकस्तोत्रं चित्तं[7] धर्ममनु प्रब्रुवन्[8] स्थास्यतीति ।
अथापि वागुक्रम[9]हः ।
संयुक्ते वाङ्मनसे[10] भवत इति ।
न दशमस्येत्यपरम् ।
उपरिष्टात् पत्नीसंयाजानां भवति[11] ।
यन्नूनं दशमस्याभविष्यत् पुरस्तात् पत्नीसंयाजानामभविष्यदिति ।
अथाप्यत्र त्रिकः स्तोमः[12] ।
कथं त्रयस्त्रिꣳशं कृत्वा समानेऽहनि त्रिकं पर्यवैष्य[13]दिति ।
अथाप्यत्र गायत्रं[14] छन्दः ।
कथं त्रयस्त्रिꣳशदक्षराः कृत्वा समानेऽहनि गायत्रं[15] पर्यवैष्यदिति ।
अथापि[16] गायत्रं साम ।[17]
कथमग्निष्टोमसाम कृत्वा समानेऽहनि गायत्रं पर्यवैष्यदिति ।[17]
अथापि वागुक्रमहः ।
अन्या[18] वाग्भवत्यन्यन्मनः[19] ।
नास्य भूयान्[20] दशमेनाह्ना सम्बन्धो[21] यथो[22] चै[23] प्रथमेनेति कापटवः ।
सर्वं वैतद् दशरात्रस्य[24], सर्वो वैतस्य दशरात्र इति शाण्डिल्यायनः ।
आयामवाचं दशक्रमं मनो व्याप्नुवाम[25] ।
न[26] संयुक्ते वाङ्मनसे भवत इति ॥ ८ ॥

अत्र[27] गायत्रीः करोति ।

1 नैतद् Cक, K; नैव Cख, G1, G2, J. 2 साध्याद B. 3 ०मासेन G1, G2, J. 4 ०राद् स० C, G1, G2, J, K. 5 मानं G1, G2, J. 6 ०त० B. 7 वित्तं G1, G2, J. 8 प्रा० B. 9 वाग्युक्त० G2, J, K. 10 वाङ् मा० B. 11 ०न्ति B. 12 ०कः स्तो० J, K. 13 ०वविष्य० C, G1, G2, J, K. 14 ०त्र्यं B, G1, G2, J. 15 ०त्री G1, G2. 16 तथा० G1, G2. 17 C omits it. 18 अंत्या G1, G2, J, K. 19 ०न्यस्तनः C; ०न्यमानः G1, G2, J; ०न्यन्माना K. 20 भूयाश्च० C; भूमान्दश० G1, G2, K; भूमान्दृश० J. 21 ०बो G1, G2, J, K. 22 यथा C. 23 Wanting in C. 24 ०त्र G1, G2, J. 25 ०नोऽप्यात्तवाम C, J, K; ०नोऽप्याम G1, G2. 26 G1, G2 omit न संयुक्ते. 27 तत्र C, G1, G2, J, K.

स्थानं गायत्रीणां यदि[1] परस्माद्वो गुर्वेवेदं स्तोत्रं तत्र लघिष्ठं छन्दो[2]ऽचिकीर्षीत्।

अथा[3]प्येवमा[4]द्यवसानसमाधिः।

प्रतिष्ठार्थो वाव गायत्रीः करोतीति[5]।

तासु विवदन्ते—ऐन्द्र्यः[6] प्राजापत्यः[7] सार्पराज्ञ्य[8]श्चान्द्रमस्यः सौर्य इति शाकपूर्णिः[9]।

तथा धानञ्जय्यः।

प्रत्यय आदित्यः, प्रत्ययो मनः।

प्रत्यये प्रत्ययम्।

तत्र[10] गायत्रं करोति।

स्थानं गायत्रस्य यदि परस्माद्वो गुर्वेवेदं स्तोत्रं तत्र लघिष्ठं सोमा[11]चिकीर्षीत्।

अथाप्येवमाद्यवसानसमा[12]धिः।

प्रतिष्ठार्थो वाव गायत्रं करोतीति।

"यज्ञायज्ञीयगौरीवितिरथन्तरवामदेव्यान्येवंयुक्तानि सामव्यूह इत्याचक्षते।" Ārṣ. K. V. 31a; 131b.

"अथैतस्मिन् ब्रह्मोद्ये वदति।

भूयांसीव ह स्म शाण्डिल्यः प्र[13]तिदिशति।

यद्वा[14]दोऽश्वत्रिरात्रे ब्रह्मोद्यं तद्वा प्रत्ययिष्यद्यथा वैतद् ब्राह्मणा अधिमन्त्रं समुदाहरन्तीति[15]।" cp. LŚ. 3. 8. 7-9.

वरवरे[16]णमत्र भवत्यन्तनिर्वचना आशिष इति। cp. LŚ. 3. 8. 10.

वृत्वा[17] वपानौदुम्बरीं समभिपद्यन्ते, सर्वकृतिं[18] कृत्वा निस्वरिता इव मन्यन्ते। cp. LŚ. 3. 8. 11.

अत आत्मानमूर्जा प्रत्याप्याययन्तो मन्यन्ते[19] ऊर्[20]गुदुम्बर इति।

"समा[21]से छन्दोव्यूहे सामव्यूहं कुर्वते[22] इति गौतमः।

अकृतकारा[23]र्थः" त्रयस्त्रिंशमग्निष्टोमसाम करोति। Ārṣ. K. V. 23 b.

---

1 यत्र B. 2 सामचि० K. 3 यथा० G1, G2, J. 4 ०वसान० G1. 5 ०रोति B. 6 ०न्द्रः B. 7 प्राजापत्याः C, K; प्रजापत्यः G1, G2; प्रजापत्याः J. 8 ०ङ्ग० C, G1, G2; ०ङ्गः श्चा० J, K. 9 ०पूर्णः G1; ०पूर्णि० G2. 10 त्र गाय is wanting in G1, G2, J. 11 ०म० G1, G2. 12 ०माधि C, ०धिनि G1, G2, J. 13 प्रदि० C, J, K; प्रविश० G1, G2. 14 यद्वादे० G1, G2. 15 ०न्त इति B, ०रति G1, G2, J, K. 16 वरण० C; चरचरण० G1, G2, J. 17 त्र B; वृत्या G1, G2, J. 18 ०कृतं B. 19 B adds इव. 20 वायु० B. 21 विस० B; समाधे G1; समादौ J, K. 22 कुर्वत K. 23 ०र्थे G1, G2, J.

उ[1]पवदिता[2]न् छन्दोमा[3]नवसानेऽचिकीर्षीत् ।

अथापि शिथिलोक्ताः ।

प्रतिष्ठोक्तश्च त्रयस्त्रिंशः, तमवसानेऽचिकीर्षीत् ।

अथापि त्रयस्त्रिंशे क्रियमाणे त्रिके सार्पराज्ञे[4] त्रिंशत[5]ःस्तोत्रीयं दशममहः सम्पद्यते सा विराट् ।

अथाप्येवं द्वादशपञ्चविंशानहः सम्पद्यते ।

नो[6]हैनमृक्स्थादराद्कारिपं सम्पदा चिदेनमुपाप्स्यामीति ।

एतद्वयं शाण्डिलम् ॥ ९ ॥

पञ्चदशस्तोत्राज्ज्योतिष्टोमात् सषोडशिकां ससं[7]न्धिकां रात्रिं ब्रूहीति ।

चतुर्विंशतिमाज्येभ्य आदत्ते ।

द्वे वामदेव्यात्, चतस्रः सार्[8]कमश्वात्, दश गायत्रास्तृचाः, तान् रात्रेः स्थाने निदध्यात् ।

चतस्रः ककुभः सौभरात्, तासां द्वितीया[9]त्तृतीययोश्चतुरु[10]त्तरं चतुरक्षरमुद्धृत्य द्वे प्रथमायामु[11]पदध्यात् ।

एवं स विरा[12]ट्प्रथमो गायत्र्युत्तरो वैतह[13]व्यस्तोत्रीयः ।

अतिशिष्टानीतरस्यां ककुभ्युपदध्यात्, तां षोडशिनः स्थाने निदध्यात् ।

चतस्रो नार्मेधात्, तिस्रश्चोष्णिहः, एकां चानुष्टुभम्, तां षो[illegible] स्थाने निद[illegible]

अ[14]तिशिष्टास्तिस्रः, कौत्सस्य द्वे[15] [बृह[16]त्यौ] नौधसात्, तथा काले[illegible] तासामेकां[17] षोडशिनः स्थाने निद[illegible]

ता[18]ः सर्वाश्चतुस्त्रिंशदक्षराः सम्पद्यन्ते ।

अ[19]तिशिष्टास्तिस्रः सन्धेः स्थाने निदध्यात् ।

द्वे[20] ककु[21]भौ रथन्तरा[22]त्, चतस्रो यज्ञायज्ञीया[23]त्, तासां द्वे द्वे सन्धि[illegible] श्रीयेपूपदध्य[illegible]

1 अप० B. 2 ०ता C, G1, G2, J, K. 3 ०नां नाव० C, G1, G2, J. 4 ०राज्ये B, सर्पे राज्ञे G1, G2, J. 5 त्रिशतस्तो० B, K. 6 नाहीनं साक्षादक[illegible] C, G1, G2, J, K. 7 सन्धिकां B; ससंससं धिकंससंधिकं G1, G2; सस[illegible]धिकां ससधिकां J. 8 सायकम० G1, G2, J. 9 द्वितीयायास्तृतीयायाश्च० C; ०तृ[illegible]यायाश्च० G1, G2, J. 10 ०क्षं तुरुक्षरमु० G1, G2, J. 11 ०या उ० K. [illegible] वितारा प्र० G1, G2, J, K but K has its त struck off. 13 ह is wanting i[n] B; वैतहव्यः स्तो० K. 14 इति० G1, G2, J. 15 हे G1, G2. 16 Wantin[g] in B. 17 ०का षो० C; ०कांषो० G1, G2, J. 18 G1 repeats here line[s] 17-20. 19 C, G1, G2, J, K add अन्तस्थान् and read प्रति०. 20 G1, G2, J add वसषोडशिक (०का G2, J)ंससंधिक ंरात्रिं निर्मिमीते. 21 ०भ G1, G2, J. 22 ०राः C. 23 ०याः C, G1, G2, J, K.

एवमेतां सषोडशिकां ससन्धिकां रात्रिं[1] निर्मिमीते ॥ १० ॥

ततः पृष्ठ्यं[2] ब्रूहीति ।

सवनेभ्यः पूर्वस्त्र्यहः[3] षोडशिनश्चतुर्थं रात्रेः पञ्चमं सन्धेः षष्ठं पृष्ठ्यांश्छन्दोमान्[4] ब्रूहीति ।

त्रिवृत्पञ्चदशयोः समासश्चतुर्विंशस्तत् सप्तमम्, सप्तदशत्रिणवयोश्च[5]तुश्चत्वारिंशस्तदष्टमम्, एकविंशत्रयस्त्रिंशाभ्यां नवमं[6]दशमे, सोऽष्टाचत्वारिंशं नवमे निधाय पञ्चदशपदकानादत्ते ।

सर्वं षोडशिनम्, ते सप्तत्रिंशत्तृचाः, तेषां चतुर्विंशतिमादाय[7] दशमस्याह्नोऽष्टावष्टौ पवमाने[8]स्थानेषु निदध्यात् ।

चतुराज्येषु तया पृष्ठ्येष्वेकम्[9], अग्निष्टोमसाम्नः स्थाने तथा सार्पराज्ञे[10] ।

त्रयस्तृचा अतिशिष्यन्ते ।

तान् प्रथमस्याह्न उक्थस्तोत्रीयान् कुर्वीत ।

एवं तदुक्थ्यादुक्थ्यमभिसंक्रामति ।

त्रिवृतं पञ्चदशम् ।

एतौ[11] माहा[12]वृक्षी सम[13]पदित्याचक्षत आचार्याः ।

दशरात्रो महावृक्षस्तस्य ह्यग्रं[14] गत्वा स्वर्गमेनम्[15]उपपद्यत इति ।

नैषां[16] सर्वस्मिन् दशरात्र उपपद्यत इत्यौपमन्यवः[17] ।

त्रयस्तृचौ[18] अतिशिष्यन्ते ।

तानग्निष्टोम[19]संस्थं[20] उक्थ्यस्तोत्रीयान्[21] कुर्वीत ।

अपरं[22]नुपच्छन्दोमेष्वेव ।

एषा सम्पत् सिध्यती[23]ति ।

तदप्येवमिवं[24] ब्राह्मणं भवति—"हत ऐन्द्रोत इति होवाचाऽभिप्रतारी[25] काक्ष[26]सेनिः, ये महावृक्षस्याग्रं गच्छन्ति क्व ते ततो भवन्ति ।" इति

---

1 सत्रि G1; सत्रि G2; सत्रि J. 2 ०ष्ठं C, G1, G2, J, K. 3 ०छ्यारछ० C, J; षष्ठ्याः छ० G1, G2. 4 ०मानं C, G1 G2, J, K. 5 ०योश्चत्वारिंशस्तद्दशमेम् G1, G2, J; ०तद्दशमे K. 6 ०मं द० B, K; ०मे द० G1, G2. 7 ०माहादा० G1, G2, J, K. 8 ०ने स्था० G1, G2. 9 पृष्ठ्ये० G1, G2, J, K. 10 ०ज्ञः C, J, ०ज्ञे G1, G2. 11 एतौता G1, G2, J, K. 12 म० C, G1, G2, J, K. 13 पदो० G1, G2, J, K. 14 ह्यग्रं G1, G2, J. 15 ०गेगम० C, स्वगम० G1, G2, J, K. 16 तेषा G1, G2, J; तेषां K. 17 ०पगनावाः G1, G2, J; ०पगमनावाः K. 18 ०च G1, G2. 19 तान् योऽग्नि० C, J, K; तान्यग्निष्टो० G1; तान्यग्निष्टो G2. 20 ०स्थास्तो० G1, G2, J, K. 21 ०यानि B, ०यान् G1, G2, J. 22 अपररूपं तच्छ० C; अपरूपं तच्छ० G1, G2, J, K. 23 ०ध्यवती० G1, G2, J. 24 ०मेव C, G1, G2, J. 25 ०रिणं B. 26 ०सेनिम् B.

एतद्ध महावृक्षमवोचत्। PB. 14. 1. 12.

तस्य ह्यग्रं गत्वा त्रिवृत्पञ्चदशयोः पक्षयोः क्रियां दर्शयति।

तदप्येवमिव ब्राह्मणं भवति—"त्रिवृत्पञ्चदशावेव स्तोमौ पक्षौ कृत्वा स्वर्गं लोकं प्रयन्ति[2]।" इति। PB. 14. 1. 13.

तयोः समासश्चतुर्विंशः।

तस्याष्टाचत्वारिंशो द्वादशातिशिष्यन्ते[4]।

तथा—दशमात् स चतुर्विंशो य एतौ[5] सम्पदौ[6] विदुः।

ते पक्षिणः[7] ये न[8] विदुस्तेऽपक्षाः।

तदप्येवमिव[9] ब्राह्मणं भवति—"ये वै विद्वांसस्ते पक्षिणो येऽविद्वांसस्तेऽपक्षाः" इति [10]तेऽपक्षा इति ॥ ११ ॥ ibid.

[11]द्वितीयः पटलः

अथातो गवामयनम्।

तदेक एकेना[12]ह्नाभिविदधति[13]।

"सर्वं[14] ज्योतिष्टोमेनैके[15]।" LŚ. 4. 5. 2.

"अतिरात्रं[16]चतुर्विंशं[17]नवाहमतातिरात्रः" इति कृत्वा संस्तृणन्ति।

अत्रैवैके[18] गोआयुषी दशरात्र[19]मित्युपाहरन्ति[20]।

एतं संवत्सरप्रवर्ह इत्याचक्षते। cp. LŚ. 4. 5. 4.

शङ्खाहृतमिति च। cp. LŚ. 4. 5. 5.

एतच्[21]छातशूर्पो वार्षगण्य आसाञ्चक्रे।

नानाऽहोभिर्वयं कल्पयामः। cp. LŚ. 4. 5. 6.

यथैतद् ब्राह्मणम्—"अथ खलु य ऊर्ध्वं ज्योतिष्टोमदशाहाभ्याम् क्रतवः सप्तभिः पर्यायैस्तेषु[22] ज्योतिष्टोमानाञ्च दाशरात्रिकीणाञ्च[23] द्र णामागमो भवति।" Ārṣ. K. V. 3

---

1 ०यो० G1, G2, J, K. 2 ०यच्छन्ति G1, G2, J, K. 3 ०शीति० G2. C, G1, G2, J, K add ऽष्टमात्. 5 एते C, G1, G2, J, K. 6 ०दौ C, G2, J, K. 7 दक्षि० G1, G2, J, K. 8 B adds मात्. 9 ०प्येव G1, G2, J, 10 C does not repeat ते…इति; K does not repeat ते. 11 In B or 12 एतेना० J. 13 ०धते C, G1, G2, J, K. 14 Wanting in C, G1, G2, J, K. 15 ०मेनाथैके C, J, K; ०मेनाके G1, G2. 16 ०त्रि० G1, J. 17 ०शे नवा म० B, J; ०शतेनवाहं म० G1, G2; ०शे नवाह० K. 18 ०त्रैके C. 19 रात्र is wanting in J. 20 ०पहर० B; ०पर० G1, G2; ०पार० J. 21 एतस्या सशूर्पो वार्कखण्ड आ० C; एतस्यात शूर्पो वार्कखण्ड आ० G1, G2, J, K. 22 ०स्तेषां B. 23 ०करणं च J.

"स्तोमान्वितानि स्थानान्वितानि पृष्ठान्वितानि तन्त्रान्वितानि भागान्वितानि संस्थान्वितानि आशीःसप्रायाणीति[1] रूपा[2]च्छान्दसान्या[3]यन्त्यपि च व्यावृत्त्यर्थानि।" Ārṣ. K. V. 137a.

तत्रेह चतुर्विंशे यानि सप्तमात्[4] स्तोमान्वितानि तानि[5]।

यानि [ द्वितीयात्[6] ] स्थानान्वितानि तानि।

यानि ज्योतिष्टोमात् पृष्ठान्वितानि तानि।

[ यानि[7] ] दशरात्रात् "सर्वाणि रूपाणि क्रियन्ते" इति तानि।

PB. 4. 2. 14.

यानि छान्दसान्यभिभवन्ति प्रवन्ति स्वस्त्ययनप्रवादान्युपक्रमेऽभिरूपाणीति तानि।

तद् खलु बृहत्पृष्ठमपि रथन्त[8]रं माध्यन्दिनं[9] कुर्म उपक्रमणीयमहरिति।

रथन्तरं द्वितीयं[10] बृहद्धे[11] के चो[12]भयसामान इति ह स्माह शाण्डिल्यायनः।

बृहत्पृष्ठास्ते रथन्तरमाध्यन्दिना आं[13]शयेनैव।

अपि च[14] स्वे सवने स्वे छन्दस्युमे वामदेव्योत्तरे भवत इति।

चतुर्ऋचं होतुराज्यं समामनामः।

तासां चतुर्थीमुद्धरति।

उद्धर्[15]ती भवति।

अपरूपा प्रायणार्थे।

अथाप्य[16]स्यां स्व[17]र्णप्रवादो भवति।

अपरूपा स्वस्त्ययनार्थे।

अथ यत्रैतत् सर्वस्वारे भवत्येतां[18] तत्र करोति।

अथ खलु प्लवमन्वहं ब्राह्मणं सन्तत्यां[19]न्वहं कुर्मः।

एवं च रहस्यब्राह्मणं[20] दर्शयति।

अपि शश्वद्ब्राह्मणमधीयते।

ते वा एते प्लवाति[21]प्लुता ये प्लवमन्वहमुपयन्तीति ॥ १२ ॥

उद्धरन्त्याचार्याः—त्रैककुभं समानोदर्कयोनि।

अपरूपं प्रायणार्थे।

---

1 ॰याणि B. 2. रूपाण्यिच्छा॰ B. 3 ॰या॰ B. 4 ॰मा G1, G2, J, K. 5 Wanting in B. 6 Wanting in B; ॰या G1, G2, J, K. 7 Wanting in B. 8 ॰तरमध्य G1, G2, J. 9 म॰ C, G1, G2, J, K. 10 ॰यमिति C, G1, G2, J, K. 11 ॰इदेके G1, G2. 12 चो is wanting in G1, G2, J. 13 कुशलेनैवम् C, G1, G2, J, K. 14 Wanting in C, G1, G2, J, K. 15 उद्धरत्युनी G1, G2, J. 16 ॰प्येतस्यां C, G1, G2, J, K. 17 ॰स्यारंभेण प्र॰ B. 18 ॰स्येकां B. 19 ॰न्तमन्व॰ B. 20 ॰णे C, G1, G2, J, K. 21 ॰तिप्लुवा C.

तत्रैतत् सौभरं पृष्ठान्वितम् ।

विकल्पो वा स्याद्[1] ब्राह्मणचोदितत्वात् ।

"अथे[2] खल्वाहु[3]—'सर्वाणि रूपाणि क्रियन्ते' इति । PB. 4. 2. 14.

तत्रा[4]चार्या[5] एतेष्वेव[6] द्वन्द्वेषु[7] सर्वान् स्तोमान् सर्वाणि[8] पृष्ठानि सर्वा[9] विभक्तीश्च[10] दशरात्र[11]रूपाणीति भक्ति[12]मात्रेणैव कल्पयन्ते । त्रिवृत्पञ्चदशौ चतुर्विंशः[13] सम्पद्यते[14] ।" Say. ibid.

पञ्चदशसप्तदशान् पञ्चैकविंशान् षडेव त्रिणवान् षट् त्रयस्त्रिंशान् सर्वाणि पृष्ठानि बृहद्रथन्तराभ्यामुपाप्तानि ।

एतत्परोक्षाणि[15] ह्रीतराणि[16], वामदेव्येन वैतसाद्धिरुष्टानि, उद्वंशीयेन वा । एतद्धि सर्वेषां[17] रूपमिति ।

अनिरुक्तौ विभक्तयः[18] ।

निरुक्तं[19] सर्वाभिप्रायम्[20], वामदेव्येन स्वरविभक्तिः[21] ।

पृथक् दाशरात्रिकेभ्यो[22] द्रव्यागमं सम्पश्येत् ।

उपवती[23] प्रथमात्, अग्नियवती द्वितीयात्, दविद्युतवती[24] तृतीयात्, सत्रासाहीयं सस्तोत्रीयं चतुर्थात् ।

अथ खलु साकमश्वमुक्थप्रणयेऽकरिष्यत् ।

अतिरात्रे तत्कृतं भवति ।

तत्र समविचारयिषीत् ।

तत्रैतत् सत्रासाहीयं त्र्यहोपक्रमादुपक्रमेत्[25] ।

बार्हताद्[26] बार्हते ।

सोढवतीषु सोढवश्रमः[27] ।

अथेदं कर्म सहेमहीति पार्थं पञ्चमात्[28] ।

उद्वंशीयं षष्ठात् ।

"यद्वा उद्वंशीयं तदुद्वंशपुत्रः ।" इति हि[29] भवतीति । PB. 13. 12. 10.

उद्वंशीयेनैव सर्वरूपा[30]वाप्तिमेके ।

---

1 ॰स्याद् C. 2 अथो S. 3 ॰हुः S. 4 तत्र is wanting in S; C, G1, G2, J, K add खलु after तत्र. 5 ॰र्यः G1, G2. J, K. 6 ॰ष्वेव G1, G2, J. 7 Wanting in C. 8 सर्वापि G1, G2, J. 9 सर्वाणि G1, G2, J, K. 10 ॰क्तीदर्श॰ C; ॰क्तीदशदश॰ G1, G2, J; ॰क्तीनि K. 11 ॰त्रि॰ G1, G2. 12 विभ॰ S. 13 ॰शाः स॰ C, G1, G2, J, K. 14 सम्पा॰ S. 15 ॰क्षणी G1, G2, J. 16 ह्रि॰ G1, G2, J. 17 ॰क्ताया C. 18 Wanting in C. 19 C adds विभक्तं. 20 ॰णिप्रायं G1, G2, J, K. 21 ॰रभ॰ B. 22 दाद॰ B. 23 ॰वीती J. 24 ॰द्युती B; ॰द्युनती K. 25 ॰मे B, G1, G2, J, K. 26 बार्हतमिताद् B. 27 ॰त्रमः G1, G2. 28 ॰नम् B. 29 हे G1, G2, J. 30 सर्वारू॰ G1, G2, J.

वहु सप्तमात्।
"इन्द्रो अग्ना नमो बृहत्" SV. 2. 150; RV. 8. 12. 15; PB. 11. 7. 3; 14. 8. 2.

इत्यष्टमात्।
समन्तदैर्घश्रवसे नवमात्।
अभीवर्तः सस्तोत्रीयो दशमात्॥ १३॥

# अथ पञ्चमः प्रपाठकः

[1]अथैषोऽभिप्लवः[2] ।

तस्मिन् सारण्ये गेयं[3] छन्दः क्षुतं वभूवेति शाण्डिल्यः ।

अर्द्धमेव प्राग् विषुवतोऽर्द्धमूर्ध्वं[4] सादित्यव्रतानि शुक्रियाणि विषुवतीति, "सतवःश्यावीयानि सामानि व्रत इति" समूहति । Ārṣ. K.V. 50a.

बार्हद्रथन्तरपृष्ठ्यादनित्याभिरनित्योऽयं षडह[5] इति ।

अषाडह्निकीरनित्या इत्याचक्षते ।

[ ते[6] ] खलु शश्वद्भाल्लविनः स्तोत्रियात् प्रतिपदः कुर्वन्ति, यथास्थानमेवानुरूपान् ।

अनु[7]रूपान् वयं प्रतिप[8]दः कुर्मः, स्तोत्रीयानुरूपान् ।

एवं यथोत्तर[9] स्तोत्रीयानुरूपाणां प्रत्याहारो भविष्यतीति[10] ।

षडहवशेन नाना[11]प्रतिपदः समानं पर्यासम्[12], एकाहवशेन तेन प्रच्युतं द्वितीयपर्यासं प्रथमेऽहन्यनुगृह्णाति ।

अथैता[13]न्येव वैयूह्वि[14]कान्याज्यान्युद्धृत्य गायत्राणि तद्विभक्तीनि प्रतिनिदधाति ।

त्रीणि त्रिणिधनानि[15] करोति ।

त्रीणि[16] ह्येव षडहेऽवधारितत्रिणिधनानि भवन्ति ।

तानि यत्र यथाकृतमभ्यस्यति[17] ।

आयास्यं प्रायश्चित्तिसाम षष्ठेऽहनि चिकीर्षन् पार्थे द्वितीयस्य माध्यन्दिने[18] करोति ।

---

1 In C only. 2 ०वाः G1, G2, J, K. 3 गेहे G1, G2; गेहं J, K. 4 ०वती B; ०वति C, K. 5 ०षडह इति is wanting in B. 6 Wanting in B. 7 Wanting in G1, G2, K. 8 ०पदुपकुर्मः B. 9 यथान्तरं B. 10 भवतीति C, J. 11 नाना wanting in G1, G2. 12 ०र्यासम् G1, G2, J. 13 ०तानेव G1, G2, J. 14 ०षिका० C, G1, G2, J, K. 15 त्रीणि त्रयनानि B; निधनानि K. 16 C repeats त्रीणि. 17 ०स्यन् G1, G2, J. 18 ०न्दिनात्स्यं C, K; ०न्दिनाहं G1, G2; ०न्दिनांव्यं J.

"एतत् पुरस्तात् स्तोभं क्षत्रसाम बृहति पृष्ठे[1]ऽभिरूपम्", तेन प्रच्युत[2]मिद[3]वद्वासिष्ठ[4] षष्ठेऽहन्यनुगृह्णाति स्वरविभक्तेरनुग्रहाय ॥ १ ॥ Ārṣ. K. V. 37 b.

अथैते त्वाष्ट्रीसाम चान्धीगवं च तृतीयचतुर्थयोरह्नोर्व्यतिहरति त्र्यहयोर्व्यतिषङ्गाय।

[तत्र[5]] ता एव देवताविभक्तयः।

अथ सामान्तविभक्तयः।

एते[6]षामेव द्रव्याणां तल्लिङ्गाः कल्पयेत।

पञ्चमे तु निधनविभक्तिर्न विद्यते।

षष्ठे[7] चेडाविभक्तिः।

तत्राभ्यावारयन्ति—

वार्हद्गिरं वा[8]नुकल्पयेत्, सौश्रवसं वा।

उक्थानां ब्रह्मसाम कुर्यात्।

गोष्ठं षष्ठे नु कल्पयेदिति।

तस्य त्रिकद्रुकाः स्तोमाः, षाडहिकानि तन्त्राणि।

अस्ति हि[10] षडहप्रवादः।

अपि चैव[9] रहस्यब्राह्मणे दर्शयति—ज्योतिष्प्रायणो ज्योतिरुदयनः षडहोऽभिप्लव इति चैतरेयिणाम्।

तां[11]स्तु यदेवं प्रयुङ्क्ते, एवं ज्योतिष्प्रायणो ज्योतिरुदयनः षडहो भवति, यथास्थानमितरा[12]विति।

तत्र यान्यैकाहिकानि द्रव्याणि स्तोमा[13]नि तानि।

[ यानि षाडहिकानि तन्त्रान्वितानि ता[14]नि। ][15]

यानि छा[16]न्दोमिकानि त्रयान्तानि।

त्रय[17]स्ते त्रय इमे लोकसम्मा[18]स्ते लोकसम्मा[19] इमे बृहद्रथन्तरपृष्ठास्ते बृहद्रथन्तरपृष्ठा इमे[20] इति।

रूपा[21]च्छा[22]न्दसान्यायन्त्यपि च व्यावृत्त्यर्थानि[23]।

1 षष्ठे० B; षष्ठभिरूप G1, G2, षष्ठिभि० J. 2 प्रत्युत० G1, G2, J, K. 3 ०मिव० G1, G2, J. 4 ०ये च० J. 5 Wanting in B. 6 एष तेषा० G1, G2, J, K. 7 पृष्ठे B. 8 च C, G1, G2, J, K. 9 इरस्य० G1, G2, J. 10 G1, G2, J omit ऽभिप्लव ... षडहो (line 19). 11 तांस्तुमदे० C; K adds न. 12 ०मितरदिति C; ०मिराविति G1, G2, J. 13 ०मान्वितानि C, G1, G2, J. 14 Wanting in G1, G2. 15 Wanting in B. 16 छन्दो० C, G1, G2, J, K. 17 य० B. 18 Wanting in G1. 19 ०सम्मास्त C, G1, G2, J. 20 इमा C. 21 K repeats रूपा. 22 ०छान्दसान्या० C; ०छन्द० G1, G2, J, K. 23 G1, G2, J, K add च.

स्वोदिष्टां[1] प्रथमस्याह्न आर्भवीयां[2] करोति ।
या ह्येतस्या[3]र्भवीया भवति न तस्या उत्तरेऽधीमहे ।
तस्याः शश्वन्माषशरावय उत्तरेऽधीयते ।
तां[4] ते कुर्वन्ति, आभीशवं चतुर्थे ।
नावमिकं कुर्यादिति धानञ्जय्यः ।
व्यावृत्तये पृष्ठ्याभिप्लवयोश्चातुर्थिकमेवेति गौतमः ।
एषैतं[5]स्याह्नः स्वरविभक्तिर्भवतीति भवतीति[6] ॥ २ ॥

तृतीयः[7] पटलः

" 'अभीवर्त्तो ब्रह्मसाम' इति । PB. 4. 3. 1; 18. 6. 14.
तस्य स्तोत्रीयविधिः—'यदितैः[8] समानꣳ[9] साम भवत्यन्योन्यः प्रगाथः' इत्यत्यन्तनानात्वम् । PB. 4. 3. 8.
'य आस्तुतं कुर्वते यथा दुग्धामुपसीदेदेवं तत्' इति प्रयुक्तप्रतिषेधः । PB. 4. 3. 11.

तस्यान्ववायः—
'पञ्चसु माःसु बार्हताः प्रगाथा आप्यन्ते' इति ।" PB. 4. 4. 1; LŚ. 10. 6. 1; Kalp. 1. 7.
अथातः प्रगाथायनानि[10]—
"चतुःशतमैन्द्राः बार्हताः प्रगाथाः, दशतयीषु[11]" तान् समामनामः[12] । LŚ. 10. 6. 3. Kalp. 1. 7;
" 'तेषां चत्वारोऽन्यप्रस्थानां[13] बृहद्रथन्तरकालेयस्तोत्रीया अहरहः शस्यन्ते[14] ।' cp. LŚ. 10. 6. 4.

इन्द्रक्रतुरौत्तरपक्षिकः ।
शतमतिशिष्यंते[15] ।
'तेषामेकं चतुर्विꣳशे कुर्यात् ।' LŚ. 10. 6. 5
नूनं[16] शतम[17]तिशिष्यते ।
सप्ताशीतिः सतोबृहत्यः ।
ते 'एकोन[18]त्रिꣳशत् सातोबा[19]र्हतास्तृचाः ।' LŚ. 10. 6. 6.

---

1 स्वनिष्ठां J. 2 अर्भवीयं G1, G2, J. 3 °स्याह आर्भ° C, G2, J, K; °तस्याह अर्भ° G1. 4 नान्ते कु° G1, G2, J, K. 5 एवैत° C. 6 Wanting in G1, G2, J. 7 In B only. 8 °दितिः J. 9 Omitted by C. 10 °यतानि C. 11 दा° B. 12 समामनेग् C; समामेन G1, J; समामने G2, K. 13 °स्थानाद् B. 14 शतस्य G1, G2, J, स्य K. 15 °न्ते J, K. 16 न्यूनꣳ B, K. 17 समति° B; शतमिनि° G1, G2, J. 18 एकेन न त्रि° C, G1, G2, J. 19 श्लोकोबा° B.

तेषामिहैकविंशतिमाहरति ।

तद्विंशं[1]तिशतं सम्पद्यते ।

'विंशतिशतं पञ्चानां मासानामाभिप्ल[2]विकान्यहानि भवन्ति ।' cp. LŚ. 10. 6. 8.

तेष्वेतान् प्रगाथान् प्रयुञ्जीत ।

'तृतीये[3] तृतीयेऽहनि सतोबृहतीः कुर्वन् य एष पञ्चमस्य मासस्योत्तमोऽभिप्लवस्तस्मिन् द्वे[4] सतोबृहती कुर्यात् ।' " cp. LŚ. 10. 6. 7, 8. Kalp. 1. 7.

तृतीयपञ्चमयोरह्नोर्न हि प्रगाथा अनुभवन्तीति ।

ततं[5] ऊर्ध्वं छन्दसी संयुज्यात् ।

"औष्णिहे तृच एकां गायत्रीमुपदध्यात् ।" cp. LŚ. 10. 6. 9.

सतोबृहत्यतिशेषं सर्मा[6]प्येत्येव गौतमः ।

"अष्टौ सातोबार्हतास्तृचा अतिशिं[7]ष्यन्ते, तान् प्रथमे चाभिप्लवे कृत्वा द्वितीयस्य चँ[8] द्व्यहे तत ऊर्ध्वं छन्दसी[9] संयुज्यादिति ।" cp. LŚ. 10. 6. 10

" 'चतुरुत्तरैरेव छन्दोभिरेतव्यम्' इति । PB. 4. 4. 5; LŚ. 10. 6. 12.

'गायत्र्यां चतुर्विंशेऽभीवर्त्तं कुर्यात् ।

उष्णिहि प्रथम आभिप्लविके, अनुष्टुभि द्वितीये ।' cp. LŚ. 10. 6. 12.

तत ऊर्ध्वं बृहत्या पञ्च मास इत्वा य एष पञ्चमस्य मासस्योत्तमोऽभिप्लवस्तस्य 'पञ्चमेऽहनि पङ्क्तीः कुर्यात्, अपि वा षष्ठे, तत ऊर्ध्वं त्रिष्टुभ्युत्तमे स्वरसाम्नि जगत्यामिति ।' cp. LŚ. 10. 6. 13, 14, 16.

अत्रापि सं[10]तोबृहत्यतिशेषं समाप्येत्येवं[11] गौतमः ।

'नव सातोबार्हतास्तृचा अतिशिष्यन्ते, द्वौ च प्रगाथौ' तान् प्रथमे चाभिप्लवे[12] कृत्वा द्वितीयस्य पञ्चाँ[13]हे पङ्क्तीः" षष्ठे वाँ[14], तत ऊर्ध्वं त्रिष्टुभ्युत्तमे स्वरसाम्नि जगत्यामिति ॥ ३ ॥ cp. LŚ. 10. 6. 17; Kalp. 1. 7.

---

1 ◦शतंस◦ G1. 2 ◦प्ला◦ B. 3 Wanting in B, C. 4 द्वयोः B, द्वयी G1, G2, J; द्वयीः K. 5 Wanting in G1, G2. 6 ◦माप्येति C, समायाति G1, G2, J; समायोति K. 7 ◦त्वे G1, G2, J. 8 Wanting in C. 9 ◦न्ति B 10 सातो◦ C, G1, G2, J. 11 ◦व G1, G2, J. 12 ◦वा G1, G2, J, K 13 पञ्चमे K. 14 Wanting in C, G1, G2, J, K.

"छन्दःसंयोगे[1]रूपोऽधविधि[2]स्तत्स्थाने चातुरुत्तर्य[3]म् ।
मासशब्दवैयर्थ्यमिति चेत् 'पञ्चसु मा॑सु[4]' इति यथा पृष्ठ्या[5]यनेऽपवादस्त[6]-लिङ्गेन · दद्राणवे[7]तीवन्न च मा[8]सान्तर एतत् कर्मास्तीति । PB. 4. 4. 1.
एकदेशे यथा का[9]लकृतौ लोके कृतमिति ।
'बृहत्या चैव त्रिष्टुभा चैतव्यम् इति ।' " PB. 4. 4. 8; Kalp. 1. 8.
"त्रिष्टुभि चतुर्विंशेऽभीवर्त्त[10] कुर्यात् ।
बृहत्यां प्रथम आभिप्लविके"[11] त्रिष्टुभि द्वितीये ।
एवमनुपूर्वं छ[12]न्दसोः प्रयोगो भवतीति ।
तत[13] ऊर्ध्वं[14] व्यत्यस्येद् ।" Say. PB. 4. 4. 10.
बृहतीत्वय एव तन्मन्य इति शौचिवृत्तिः ।
बृहत्या पञ्च मास इत्वा य एते "अष्टौ सातोबार्ह[15]तास्तृचाः" अतिशिष्यन्ते, ये चैते त्रयोऽन्यत्रस्थानौ बृहद्रथन्तरकालेयैस्तोत्रीयास्तैः षष्ठे मासि त्रिष्टुभो[16] व्यत्यस्येत् । Kalp. 1. 7.
यदह्नः कालेयस्य[17] स्तोत्रीयेऽभीवर्त्त कुर्यात् ।
'तरणिरित्सिषासति' इति । SV. 1. 238; 2. 217; RV. 7. 32. 20; PB. 12. 4. 4.
कालेयमांस[18]श्चारात् ।
यदह्नो[19] रथन्तरस्य बृहत्[20]स्तोत्रीये रथन्तरं स्यात् ।
अपि वा स्वरसाम्नोरन्यतरस्मिन् रथन्तरस्तोत्रीयं[21] कुर्यात् ।
अत्र ह्यन्यासु रथन्तरं भवतीति ।
अथ त्रयस्त्रिंशत् प्रगाथाः[22] ।
तेषामेकं चतुर्विंशे कुर्यात् ।
सातोबार्हतं त्रयस्त्रिंशायै[23]नेऽभिप्रयुञ्जीत ।

---

1 ०ग आपो० B; ०गं रू० G1, G2, K. 2 ०वियेत० B. 3 पञ्च B. 4 मासा इति B; मांस्स्त्वति G1, G2, J; मांस्त्विति K. 5 ०पृष्ठयेय० B, G1, G2, J. 6 ०स्तु लिङ्गेन C, J, K; स्तु लिङ्गे G1, G2. 7 दद्राणच्च B; रुद्राण० G1. 8 समान्तरये तद् क० C; मासान्तरये तद् क० G1, G2, J, K. 9 अकाल० B. 10 G1, G2, J omit अभीवर्त्त ··· कुर्यात्. 11 C, K add ऽपि च (वा K) बृहत्यामेव चतुर्विंशे बृहत्यां प्रथम आभिप्लविके. 12 ०च्छ० B, G1, G2, J. 13 G1, G2, J, K add ते. 14 ०नाद् B. 15 ०कालेये स्तो० G1, G2, J. 16 त्रैष्टुभो C. 17 ०य: G1, G2, J. 18 ०यं स० B; ०यमसं० K. 19 ०ह्ना G1, G2, J, K. 20 बृहत्स्तो० G1, G2, J. 21 ०या G1, G2, J but G2 corrects it. 22 ०षमेकं च० C, G1, G2, J, K. 23 ०ञ्ञानयने B.

अपि वा न सतोबृहतीराद्रियेत, य एव चतुर्विंशे तमनुसंहरेदिति ॥ ४ ॥

एतेनैवोत्तराणि [ द्व्याणि ] व्याख्यातानि ।

आ द्विप्रगाथाद् यार्थोकामी पुरस्तात् प्रगाथानां स्यात्, तथोपरिष्टादिन्द्रक्रतौ सामानि प्रकल्पयेत् ।

तावन्ति तच्छन्दस्यानि निधनवन्ति ।

यदि तच्छन्दस्यानि न विद्येरन्नपि वैछन्दसानि कुर्याद् यान्यभिरूपाणि स्युर्गीतितश्च निधनतश्च ।

कतम एषां कल्प इति ।

प्रथमौ प्रतिषिद्धावित्याहुः ।

अथेतरे सर्वे कल्पाः ।

अपि वा द्विप्रगाथमेव कल्पः स्याद् ।

दोषदर्शी नूनं पूर्वानत्यक्रमीदिति ।

ते कस्य हेतोः ।

षद्प्रगाथमयनं समारप्स्यन्तीति ।

नेदं षद्प्रगाथमिति शाण्डिल्यायनः ।

यः षट्प्रगाथं चिकीर्षेन्न सतोबृहतीराद्रियेत ।

यं एवं चतुर्विंशे तमनुसंहरेदिति ।

स खल्वयमभीवर्त्तः षट्प्रगाथानधितिष्ठति ।

पूर्वस्मिन् पक्षसि द्वयोश्च सतोबृहतीः ।

एवमेवेन्द्रक्रतूत्तरे पञ्च प्रगाथिकानि, द्वे सातोबार्हते, विकर्णमष्टमम् ।

एवमनयोः समाधिरिति ।

अथैतत् सुज्ञानमौष्णिहमाविषुवतः सर्वत्र पृष्ठ्यपञ्चाहवर्जम्, अतिरात्रावं यथाकामकल्प्यत्वादेतेषामह्नामिति ।

एतदभिप्लवस्य राथन्तरेष्वहस्सु विचार्यते ।

1 G1, G2, J add ओं. 2 Wanting in B. 3 G1 omits द्र... प्रगाथानां. 4 यथाकारी C, G2, J, K. 5 ०थात्स्यात् C, J, K. 6 प्रतिकल्प० C, G1, G2, J, K. 7 छन्द० G1, G2; न छन्द० J. 8 निधनवन्ति ... ०स्यानि wanting in G1, G2. 9 C, G1, G2, J, K omit वै. 10 ०नंत० G1, G2, J, K. 11 ०विध्या० G1, G2. 12 सर्वं G1, G2, J. 13 पूर्वान्यत्य० K. 14 ०था० G1, G2, J. K. 15 B adds अपि वा. 16 एत G1, G2, J. 17 ०भि० G1, G2. 18 ०सिद्धेश्च C, G1, G2, J, K. 19 ततोबृहतीम् B. 20 ०क्रतुरुत्तरे C, G1, G2, J, K. 21 सतो० C. 22 ०वर्ज्यम् B; ०र्जं G1, G2. 23 ०वायया० C, G1, G2, J 24 ०ह्नां तदभि० C, G1, G2, J, K. 25 ०रेष्वह० G1. G2. J.

पृष्ठे[1] चैवमिव[2] षडहे नानास्वस्त्ययनानि[3] भवन्तीति[4] ।
"पृष्ठ्यमेवं छिन्दन् व्यूहेत् समूहेदिति ।
व्यूर्ढः[6] स्यादिति शाण्डिल्यायनः ।" Ārs. K. V. 108 b.
एवमस्यापि[5]दर्शनं भवति ।
अथाप्येवं पुराणमाचार्यवचं[7] इति ।
समूढः स्यादिति धानञ्जय्यः ।
एष न्यायः ।
एवꣳ हि ज्योतिष्टोमः, एवं दशरात्रस्य प्रथमस्त्र्यहः, एवं दशमम्, एवमहीनैकाहा इति ।
अथापि समूढ एव पूर्वमुत्पन्नोऽपरो व्यूढः ।
एवꣳ हि रहस्यब्राह्मणे दर्शयति, एवमिव ब्राह्मणं भवति, छन्दाꣳसि वा ।
अन्योन्यस्य लोकमभ्यध्यायन्नित्युत्पन्नस्य लोको[8] नाम भवति ॥ ५ ॥

अथापि विलुप्तो व्यूहः[9] ।
षडहेन हि त्रिष्टुभः प्रतिपत्त्तां[10] भजन्ते[11] न जगत्यो माध्यन्दिनान्तान्न[12] गायत्र्य आर्भवान्तान्[14] ।
यत्रैवं[13] खल्वेतच्छन्दाꣳसि विप्रच्युत्य दशमेऽहनि सम्प्रकल्पन्ते तत एव व्यूहः सिध्यतीति ।
"तदप्येवमिव ब्राह्मणं भवति—'नर्ते छन्दोमेभ्य पृष्ठो व्यूहमानशः' इति ।" Say. PB. 23. 1. 5.
अथापि समूढेन षडहेन सम्प्रयुक्तो भवतीति ।
तस्यैके प्रत्नवद् बहिष्पवमानं कुर्वन्ति ।
न ह्येता व्यूहकारिता इति ।
नवाहयोगा इमा भवन्तीति धानञ्जय्यः ।
कथमसमापयिष्यन्नवाहं नवाहयोगैः कुर्यादिति ।
तत्र नित्यावुपवत्ताविमावभिप्लवन्यायेन[15], पार्थं द्वितीयस्य माध्यन्दिनान्त्यमभिप्लवन्यायेन[16], नित्याभिः समूहति—नित्योऽयं षडह इति ।
तत्र तान्येव सामूहिकानि यान्य[17]भिप्लवे ।
जनित्रमेवैतदन्यत्[18] ।

1 षष्ठे G1, G2, J, K. 2 श्चैव० C. 3 ०स्वर्णिधनानि C, G1, G2, J, K. 4 भविष्यन्तीति C, G1, G2, J, K. 5 ०मपि B. 6 व्यूहः K. 7 ०वचत B. 8 लोकानां य० B. 9 व्यूढः C. 10 ०त्त्रां C, G1, G2, J, K. 11 लभते C, लभन्ते G1, G2, J, K. 12 मध्यम दिनान्ता न B. 13 ०वं C, G1, G2, J. 14 ०गाद् B. 15 नित्यावुपपन्नौ कविमानभि० C; नित्यावुपवछोकविमानभि० G1, G2, J, K. 16 ०ने B. 17 ०न्या० B. 18 जनित्राण्येवमे० C; जनित्रामेवैदन्य G1, G2, J.

तदेतत्[1] स्वयोनि[2]कामाः[3] कारयन्तीति ।
कथं पृष्ठ्ये[4]ऽभीवर्त्त[5] इति[6] ।
अकर्तव्य इति शौचिवृक्षिः ।
"पञ्चसु मासु वार्हताः प्रगाथा आप्यन्ते" इति[7] । PB. 4. 4. 13; LŚ. 10. 6. 1.
अन्यतः[8] पृष्ठ्यादेवैषाप्तिः सिध्यतीति ।
कर्तव्य इति गौतमः ।
यत् सामावसृजेयुरवस्वर्गाल्लोकात् पद्येरन्निति हि भवतीति ।
पृष्ठ्ये वाऽस्यैतत् सतोऽवादीत्[9] ।
नह्येनं केचनाभिप्लवात्च्यावयन्तीति ।
तत्रं[10] बृहतीषु कालेयं[11] द्वितीयमनुकल्पयामः ।
सन्तानरूपमस्मिन् भवतीति ।
कथमभिजितीति ।
अकर्तव्य इति शौचिवृक्षिः ।
कर्तव्य इत्येव गौतमः ।
तत् पृष्ठ्येनैव व्याख्यातम् ।
अथाप्येष एवं क्लृप्त एवैकोऽह[12] आगच्छत्यभीवर्त्तमध्यन्दिन इत्यभीवर्त्त-
मध्यन्दिन इति ॥ ६ ॥

[13]चतुर्थः पटलः

अथैते स्वरसामानः ।
तानग्निष्टोमा[14]नाहे[15] ।
नवाहकारिणः कुर्यु[16]रुक्थान् एकविंशत्यहः[17]कारिणः ।
योऽन्यथा कुर्यादकुशलः पुरुष इति विद्यात् ।
अथैषां[18] बृहत्[19]स्तोत्रीया आनुष्टुभा एकबृहतीकाः ।
अनुष्टुभौ पूर्वे राथन्तरीयौ[20] बृहत्युत्तमे[21] ।
एतदेव विपरीतम् ।

---

1 तदू० G1, G2, J. 2 सयो० B. 3 ०कामः कारयतीति C, G1, G2, J, K. 4 पृष्ठे० C, G1, G2, J, K. 5 ०र्त्तं B. 6 G1, G2, J omit इति। अकर्त. 7 इत् G1, G2, J. 8 एते C, प्रते G1; पृते G2, J, K. 9 ०दोह्येन केन च ना० B. 10 तं खलु C, G1, G2, J, K. 11 कालेय C, J, K; काले G1, G2. 12 एवैनकदाह G1, G2; एवैनदाह K. 13 In B only. 14 ०ग्निहोमा० B; ०मान् J. 15 ०नह B, G1, G2. 16 कुरुक्थान् G1, G2, J; ०क्थान् K. 17 ०हका० C, G1, G2, J, K. 18 ०थैनां J, K. 19 पृष्ठन्तोत्री० C; पृष्ठस्तो० G1, G2, J, K. 20 ०रयोर्वृ० C, G1, G2, J, K. 21 ०मेति C, G1, G2, J.

द्वितीये चतु[1]र्ऋचं तृतीयस्य भवति ।
तासां तृतीयामुद्धृत्य चतुर्थीं[2] तृतीयां[3] कुर्मः ।
एषा बृहती भवति[4] ।
अथ यत्रासु षोडशी[5] साम भवति सर्वास्तत्रानुष्टुभो भवन्ति ।
तत्र[6] खलु बृहद्रथन्तरे[7] करोति, स्वराणामेव पृष्ठत्वे तिष्ठमानः[8] ।
अथ स्वराणि[9] ।
आनुष्टुभान्यनुष्टुप्स्विति ।
तत्र यान्येकाहिकानि द्रव्याणि पृष्ठान्वितानि तानि[10] ।
यानि षाडहिकानि तन्त्रान्वितानि तानि[11] ।
यानि छान्दो[12]मिकान्यभिप्लव एव तानि व्याख्यातानि ।
क्षुल्ल[13]कवैष्टम्भं प्रथमेऽहनि करोति ।
दिर्ग[14]नुप्रहायाऽदिक्रमत्र स्वरं भवति ।
तेन प्रच्युतं[15] संहितं तृतीयेऽहन्यनुगृह्णाति ।
पक्ष[16]योः सन्तानाय विकल्पयन्ति, मनुष्टुभो मध्ये निधना[17]न्यैडान्यौ[18]जिघृक्षन्तः ।
स खलु विकल्पयन् स्वा[19]राण्यन्त्यानि कुर्यादविकल्पय[20]न्नैडानि ।
विकल्पयन्तश्चो[21]तं हैके विकल्पयन्तश्चैडान्येव कुर्वन्ति ।
तृतीयसवनक्षात्रेण विकल्पयंस्त्वेव स्वाराण्यन्त्या[22]नि कुर्यादविकल्पयन्नैडा[23]नि ।
वसिष्ठस्य प्रियं चतुर्थाद् यार्था[24]तथ्यात् प्रत्याहरति ।
तैरश्च्यं[25] वेति[26] विचारयन्ति ।
उद्वंशीया[27]र्थमिहानुगृह्णाति ।
आमहीयवं द्वितीयात्प्रच्युतं तृतीयेऽहन्यनुगृह्णाति ।
एत[28]त् स्वयोनि भवतीति ॥ ७ ॥

---

1 ०र्ऋचस्तृ० B. 2 G1, G2, J, K add तु. 3 ०या कु० J. 4 भवतीति G1, G2, J, K. 5 ०डिन G1, G2, J; ०डिनं K. 6 यत्र J, K. 7 C adds ते. 8 ०ने G1, G2, J. 9 B adds मनुष्टुप्सु; K adds आनुष्टुप्सु. 10 Wanting in G1, G2, J. 11 Wanting in G1, G2, J. 12 छन्दो० B, C, G1, G2, J. 13 कल्पकवै० B; क्षुल्लकवै( ०वै J )ष्टम्भं G1, G2, J. 14 ०महायादिक्रमत्र C; गनुमहादादिक० G1, G2. 15 ०तं हि तं C. 16 ०क्षसोः C. 17 निधना is wanting in G1, G2, J. 18 ०न्यजिघृक्ष० G1; ०न्यजि० G2, J, K. 19 स्वराण्यन्त्यानि B. 20 G1, G2 omit विकल्पयन्नैडानि. 21 ०श्चो B. 22 ०न्त्या G1, G2, J. 23 ०न्नैडानि C, G1, G2. 24 याथान्तर्याद C, G1, G2, J, K. 25 ०श्चं B. 26 वेति B. 27 ०शीयवार्थमि० C, G1, G2, J, K. 28 एव C, G1, G2, J, K.

अथैष विषुवान्—

तत्र[1] खलु बृहद्रथन्तरे करोति शुक्रियाणामेव पृष्ठत्वे तिष्ठमानः।

अथापि स्वर्गोक्तो विषुवान्, तत्र स्वर्गोके बृहद्रथन्तरे अचिकीर्षीत्[2]।

ते[3] यत् पवमानयोर्निदधात्येतदेनयोरपयतोः[4] स्थानं भवति।

ते यद् बृहत्यां चानुष्टुभि[5] चैतौ नेदिष्ठिनौ[6] चातुष्पदावावापाविति।

तत्र खलु गोस्तन्त्रं करोति।

एतदन्ततन्त्रतरम्।

अन्तविधोयं[7] भवति मध्यचरः[8]।

तत्र यान्यन्तलक्षणानि मध्यलक्षणानि[9] ज्योतिर्विधानि शान्तिविधानि[10] शुक्रियसदृशान्यभिरूपाणि तानि।

अथ[11] खल्वत्रानुष्टुभः प्रतिपदः करोति।

यथैतद् ब्राह्मणम्—उपवती[12] वयं परमेऽहनि परमां प्रतिपदं कुर्मः।

यान्यन्यानि बृहद्रथन्तराभ्यां पृष्ठानीति ह स्माह शाण्डिल्यायनः।

उपवत्येव तेषां कुशलेनोपोह्येव तानि बृहद्रथन्तरे इति।

अथाप्यात्मोक्तो विषुवान्, तं प्राणोक्त्या गायत्र्या प्रत्यपित्सीद्[13], दान्तोऽनादान्तमिति वा।

'वाते[14] आ वातु' इति मौपशारायः[15]। SV. 1. 184; 2. 1190; RV. 10. 186. 1; LŚ. 4. 6. 21.

'अग्निरिन्द्राय पवते' इति शुङ्गाः। cp. SV. 2. 1175; LŚ. 4. 6. 20.

तस्या उत्तरे उपवती[16] चाग्नियवती च[17]।

तत्रैके[18] नाभीवर्त्तं कुर्वन्ति।

पौर्वपक्षिकोऽयं भवति।

अथाप्येवं सुज्ञानेन समाधिरिति।

मध्यन्दिने वयं कुर्मः।

एवमिदं ब्राह्मणं भवति—"तावुभौ विषुवति कार्यौ" इति। PB. 4. 7. 1.

यद्वेतत् सुज्ञानेन समाधिरिति, आर्भवचरं तद्भवति।

---

1 तत B. 2 °कीर्षीत् G1, G2, J, K. 3 ये G1, G2, J, K. 4 °योः स्था° K. 5 °भी G1, G2, J, K. 6 °ष्ठेनौ G1, G2, J. 7 अन्तं विधेयं C. 8 °चयः K. 9 Wanting in C क; °ण्यान्यज्यो° C ख, °णा G1, G2, J. 10 °र्वि° G1, G2, J, K. 11 अत्र G1, G2, K. 12 उपनीं G1, G2; उपवयन्ती K. 13 °त्सीदान्तेन दान्तमिति वा B; °पित्सि (°त्सीK) दां भादांतमिति व (वा K) G1, G2, J, K. 14 वेना G1, G2, वावेना J. 15 B adds वा. 16 °वीती G1, G2, J. 17 Wanting in G1, G2, J, K. 18 °मेव G1, G2, J.

नो पौर्वेपक्षिकमूर्ध्वं पृष्ठादचिकीर्षीत् ॥ ८ ॥

अथ खल्वाह—त्रिष्टुब् जगतीषु भवतीति ।

कस्येदं ब्राह्मणꣳ स्यादिति ।

पृष्ठाग्निष्टोमसाम्नोरित्याहुरेके[2], कल्पाख्याते नं भवत इति ।

अथाप्याहुः—त्रिष्टुभ एवेमौ जगद्वृत्तयो भवन्तीति ।

अथाप्याहुः—त्रैष्टुभजागतादेवेमाः सूक्तादाहृता भवन्तीति ।

अथाप्याहुः—जागतमेवात्रैकं पदं भवतीति ।

अपि वा सम्पद एव ब्राह्मणꣳ स्यात् ।

अपि वा योनिवादश्च कर्मवादश्च स्याज्जागतꣳ हि सत् त्रिष्टुप्सु क्रियत इति ।

समसितव्यास्त्रिष्टुब्जगतीर्मन्य इति कौत्सः ।

त्रिष्टुब् जगतीषु भवतीति सति किमन्यत् समासादिति ।

आवृत्ते पृष्ठ्येऽभीवर्त्तलोके सामानि प्रतिकल्पयेदिति गौतमः ।

एवं च एतसोः समाधिः ।

अपि चैवꣳ ससामेन्द्रक्रतुरनुगृह्यत इति ।

तत्रैतेषामेव चत्वारि यान्यभिप्लवे वासिष्ठगौङ्गवे च ।

द्वितीयप्रथमयोरह्नोः शुद्धाशुद्धीयं वेति[10] विचारयन्ति शाण्डिल्याः ।

एतदक्षरनिधनं भवतीति ।

नाद्रियेतेति शौचिवृक्षिः ।

तदभीवर्त्तेनैव व्याख्यातम् ।

अथापि नित्यान्येवाभिरूपतराणीति ।

इन्द्रक्रतुमस्तूयमानमनुशꣳसयन् सामानि प्रतिकल्पयेदिति गौतमः ।

जनित्रं विश्वजिति ।

यानि पृष्ठ्येऽभीवर्त्तलोके तानि दशरात्रिके पृष्ठ्ये ।

तेषां चत्वारि छन्दोमेषु, यथाभागं यथापृष्ठं पौरुमीढं मतेनं श्रात्रेणं, श्यैतं वा तन्त्रश्रात्रेण, एवं खलु कुर्यात्; नवाद्रियेत, अंसामानमिन्द्रक्रतुमनुशꣳसयितुमिति ॥ ९ ॥

---

1 पूर्व० C, G1, G2, J, K. 2 ०रेते C, G1, G2, J; K omits from एके to प्याहुः (6th line). 3 C, G1, G2, J omit न. 4 एव मा B. 5 जगद्वृ० C, G1, G2, J. 6 पृष्ठ्यो० G1, G2. 7 स मामेन्द्र० C; स मामैंद्र० G1, G2, J, K. 8 ०ष्ठागौ० C, J; ०ष्ठागौंगये G1, G2. 9 G1, G2 add प्रथम. 10 चेति C. 11 शाण्डिल्यः C, G1, G2, J, K. 12 ०स्तु० G1, G2, J. 13 दाश० J, K. 14 मते तद् B. 15 त्रात्रेण J. 16 नावा० J, K. 17 सा० B. 18 ०शास० B.

अथोपदशरात्रं सम्भरतां पूर्वे[1] पक्षसि विचारो भवति ।
अतिरात्रचतुर्विंशे त्रीनभिप्लवान् पृष्ठ्यमिति कृत्वा पञ्चायनमासानुपेयुः ।
अभिजित्स्वरसाम्नो [नं[2]] त्रिंशत्तमां[3]मुपसम्भरन्ति ।
अथैतं दशरात्रमेकं[4] आवर्त्तयन्ति, आवृत्तिसाधूत्तरं पक्ष इति ।
न वयमावर्त्तयामोऽनुपेतं[5] पूर्वे[6] पक्षसि तं कस्मादावर्त्तयामेति ।
अथापि नियुक्तमानसो भवति ।
यद्[7] हैनमृते मानसादावर्त्तयिष्यद् दशमं च मानसं च[8] व्यच्छेष्यत् ।[9]
अपि चाकृतेन दशरात्रेण मानसमभ्यशाययिष्यत् ।
[सं[10]] कस्य हेतोः ।
अ[11]कृतेन[12] व्र[13]तेन मानसमधिशाययतीति ।
व्रतसं[14]म्बन्धात् प्रा[15]जापत्यं ए[16]तं प्राजापत्यं मनः सर्वाप्तिव्रतं सर्वाप्तिमनः ।
तदपि शश्वत् सांवर्गजिता गौत[17]मा उपरिष्टाद् व्रतस्य मानसमधीयते—
मा[18] कृतेन व्रतेन मानसमधिशीया[19]मेति ।
सामान्यात्तु[20] वयमधिशाययन्तो[21] मन्यामहे ।
अथैतान्[22]यपि[23]पन्त्यहानी[24]त्याचक्षते ।
अतिरात्रचतुर्विंशे नवाहं गोआयुषी दशरात्रं व्रतातिरात्रेऽक्षयणादनपक्रमणाद्धेत्यनपक्रमणाद्धेति ॥ १० ॥

पं[25]चमः पटलः

अथातः संवत्सरा[26] वर्गाणाम् ।
पञ्च संवत्सरा[27] वर्गाः ।
तेषु[28] धीरो मनीषया कर्मण उ[29]पसदो विद्यात् ।
संस्थां[30]विधिषु व्रतानि च, षड्त्रिंशोनो नवोनश्च षडहोनः[31] ।

1 पूर्वे॰ G1, G2, J. 2 Wanting in B, त्रव G1, G2, K, तव J. 3 ॰त्तमनुपसम्हरन्ति B. 4 ॰कं B. 5 ॰तः B. 6 पूर्वे॰ J. 7 यधु C, G1, G2, J, K. 8 चरद् व्यवयिष्यत् C, चरंव्यवयिष्यत् G1, G2, K; चरंधवयिष्यत् J. 9 C adds यधु वै स मानसं व्रतं च मानसञ्च व्यवयिष्यत्; G1, G2, J, K add यधु वै समानवृत (॰व्रतं K) च व्यवयिष्यत्. 10 Wanting in B. 11 अनुकृ॰ B. 12 ॰ते G2. 13 Omitted by G1; कृतेन G2, J. 14 ॰सावन्धवत् B, ॰सानं बंधवात् G1, G2, J, K. 15 प्रजा॰ G1, G2, J. 16 Wanting in G1, G2, J. 17 गोतमाः C, G1, G2, J, K. 18 प्राकृ॰ C. 19 ॰धिशेषयामेति C; ॰भिशोशयामेति G1, G2, J, K. 20 ॰दु G1, G2, J, K. 21 ॰न्त B. 22 ॰वा॰ G1, G2, J, K. 23 ॰क्षीय॰ B. 24 ॰हनीत्याचक्ष्यते॰ G1, G2, J. 25 In B only. 26 ॰वत्सरापव॰ B. 27 ॰वत्सरापवर्गाः B. 28 ॰ष्वधी॰ B. 29 उपदो G1; उपपदो G2, J, K. 30 ॰स्था वेषु C, G1, G2, J, K. 31 ॰होहोमः G1, G2, J, K.

अथ सावनः—

अथाष्टादशभिर्ज्यायानहोभिः सावनात् परो नक्षत्रमितेमासश्च[1] ।

तस्य चैवं[2] त्रयोदशी, चान्द्रमसः सावनश्चोभौ[3] ।

[4]अथाष्टादश्युत्तमोऽष्टासप्तत्रिंशतं पौर्णमास्यां प्रसाधयेत् ।

गवामयनस्योपायां[5]श्चतुरः प्रतिपादयेत् ।

तेषां[6] नाक्षत्रः प्रथमः[7], तस्य सप्तविंशिनो मासाः[8], सप्तविंशतिर्नक्षत्राणीति[9] ।

तस्य कल्पः—

प्रथमस्य प्रथमस्याभिप्लवस्य स्थाने त्रिकद्रुकत्र्यहं[10] कुर्यात् ।

प्राग्विषुवत उत्तमस्योत्तमस्योर्ध्वं विषुवतः ।

ते खल्वभिप्लवतन्त्र[11] एव क्लृप्ताः स्युरित्येके ।

एते चेहा[12]धिकृताः ।

न[13] चापि निवर्तयति ।

अथापि दृश्यते—त्र्यहस्त्र्यहतन्त्रे क्लृप्तो यथा स्वरसामानस्त्रिकद्रुकपञ्चाहश्चाभिप्लवतन्त्रे सप्तदशरात्रे स्वतन्त्रा[14] इति ।

अपरमेवं च तन्त्राविलोपः ।

अपि च सत्रेषु त्रिकद्रुकत्र्यहः स्वतन्त्रो भवति ।

अथ नवोनः—

एतस्यै[15]व त्रयोदश मासाः[16] ।

सम्भार्ययोर्मासयोर्नवाहं लुम्पेत् ।

चतुरहमेव प्राग्विषुवतः पश्चादमूर्ध्वम् ।

तस्य कल्पः—

प्रथमस्याभिप्लवस्य स्थाने ज्योतिषं च गां च कुर्यात् ।

प्राग्विषुवत ऊर्ध्वं विषुवत उ[17]त्तमस्याभि[18]प्लवस्य स्थाने ज्योतिषम् ।

नात्र विषुवानभिभवति ।

उत्तरे तु पक्षसि विषुवानुपसङ्ख्यायत इति ।

अथ षड्नः[19]—

चान्द्रमसाः[20] षट् पू[21]र्णमासाः षड्नाः[22] ।

1 ०मिदमा० C, G1, G2, J, K. 2 ०व C, G1, G2, J. 3 उन्मभौ० G1, G2, J. 4 अथाष्टादः स्युत्तमो० G1, G2, J; अष्टादः स्युत्तमो० K. 5 ०य० C, G1, G2. 6 न० C, G1, G2, J. 7 ०मस्य स० G1, G2, J. 8 ०साः स्तस० C. 9 ०त्राणामिति B. 10 ०यं त्र्य० K. 11 ०वक्ष B; ०वनंत G1, G2, J. 12 वेहानिकृता G1, G2. 13 नु चावि B. 14 स्वरत० C, G1, G2, J, K. 15 तस्यैवं C. 16 मासस्य B; मासः G1, G2, J, K. 17 J omits उत्तम० ... ०स्यायत (line 26). 18 ०ह्रव B. 19 ०नाः C. 20 ०स G1, G2, J, K. 21 पूर्णमासाः षड्नाः wanting in C. 22 Wanting in K.

पूर्णोपक्रमा[1] ऊनावसानाः[2] पूर्वे पक्षसि मासाः स्युः ।
ऊनोपक्रमाः[3] पूर्णावसाना उत्तरे ।
तस्य कल्पः—
प्रथमस्य प्रथमस्याभिप्लवस्य[4] स्थानेऽभिप्लवपञ्चाहं कुर्यात् ।
प्राग्विषुवत एतेषु[5] मासेषूत्तमस्योत्तमस्योर्ध्वं विषुवतः ॥ ११ ॥
व्याख्यातः सावनः—
स एष आदित्यसंवत्सरो नाक्षत्रः ।
आदित्यः खलु शश्वदेतावद्भिरहोभिर्नक्षत्राणि[6] समवैति ।
त्रयोदशाहं त्रयोदशाहमेकैकं नक्षत्रमुपतिष्ठति ।
अहस्तृतीयं[7] च, नवधा कृतयोरहोरात्रयोर्द्वे कले[8] चेति[9] संवत्सरः[10] ।
ताश्चत्वारिंशच्चतुःपञ्चाशतं[11] कलाः ।
ते षण्णववर्गाः सषट्षष्टित्रिशतः[12] ।
षष्टित्रिशते श्लोकौ भवतः—
सप्तविंशती राष्ट्रस्य[13] राज्ञो[14] वसतयो मिताः ।
त्रयोदशाहमेकैकं[15] नक्षत्रमुपतिष्ठति[16] ॥
त्रयोदशाहानि तृतीयमह्न-
श्चतस्त्रेधा दशतयोऽपि[17] कुर्वन् ।
त्रिणवं[18] पन्थानं विततं पुराणं
चत्वारिंशता नवरात्रैः समश्नुते ॥ इति ।
अथाष्टादशभिर्ज्यायानादित्यसंवत्सर एव तैर्यगयनिको भवति ।
आदित्यः खलु शश्वदेकदा षण्मासानुदङ्ङेति नव चाहानि[19] ।
तथा दक्षिणा ।
तदप्येते श्लोका भवन्ति—
यस्मिन् वै परिवत्सरे सौर्यो मासोऽथ चान्द्रमः ।

---

1 °र्णो° G1, G2, J, K. 2 ऊना°···°क्रमाः is wanting in K. 3 नो° G1, G2, J. 4 स्यस्थानेऽभिप्लव is wanting in G1, G2. 5 ऊनेषु G1, G2, J, K. 6 °ता भवद्भिरहोभि° G1, G2, J. 7 अपह° G1, G2, J. 8 काले B; कला G1, G2, J, K. 9 चेति G1, G2, K. 10 सांव° C, G1, G2, J, K. 11 °वाचतुष्प° G1, G2, J, K. 12 षषष्टि° G1, G2, K. 13 °शतिरा° B; °रातांरा° G1, G2, J. 14 °क्षोपसत° B; °बवस° G1, G2, J. 15 °हं त्रयोदशाहमेकैकं C, G1, G2, J, K. 16 °मुपतिष्ठति is wanting in G1, G2. 17 °यो विकुर्व° C, G1, G2, J, K. 18 °पणय° G1, G2, J, K. 19 °हनि J.

नात्त्रो न विलुं[1]प्यते ।[2]

सप्तविंशतिमेवैषः सप्ताहानेति दक्षिणा ।

तथोदङ् सप्तविंशतिमिति ।

तस्य कल्पः—

सम्भार्ययोर्मासयोरष्टादशाहान्युपाहरेत् ।

नवाहमेव प्राग् विषुवतो नवाहमूर्ध्वं त्रि[3]कद्रुकांश्चाभिप्लवं च प्राग् विषुवतोऽभिप्लवं च त्रिकद्रुकांश्चावृत्तानूर्ध्वं विषुवतः ॥ १२ ॥

कथमनाहिताग्नेः सत्रासनमिति ।

न विद्यत इति शाण्डिल्यायनः ।

सर्वे ई[4]ष्ट्रप्रथमयज्ञाः पृथक् स[5]त्त्रोपकरणा[6]नीष्ट्वा समा[7]प्याग्नीन्सत्रमासित्वो-दवसा[8]यान्यानृत्विजो वृत्वा पृथक् पृ[9]ष्ठ्यशमनीयैर्यजेरन्निति नो विधानम् ।

यथा त्विदमद्य सत्रिणो भवन्त्यहीनयाजका इमे कृष्णाजिनकण्ठी भवन्ति ।

अथापि यः सत्रे करणाद् यजमानो मन्येत, अपि नूनं सोऽहीनै[10]कै[11]-हेष्वपि यजमानो मन्येत, तत्र ह्यपि करोतीति ।

यं[12]दु वै यजमानशब्दाद् यजमानो मन्येत, अपि नूनं ये यजामह इतीष्टि-पशुब[13]न्धेष्वपि यजमानो मन्येत, तत्र ह्यपि करोतीति ।

अथाप्याह—'य एते[14]नानिष्ट्वा' इति । PB. 16. 1. 2.

तदेतद[15]नाहिताग्नौ साधिष्ठमुपपद्यत इति ।

विद्यत इत्यपरम् ।

एवं च समारम्भः ।

अपि चैवं सूत्राणि भवन्ति—

स्थालीपाके[16]नानाहिताग्नयो यजेरन्निति ।

अथापि दृश्यते पराग्निष्विज्या—यथा पुरोहितस्याग्निभिरध्वमनुचरन्तीति ।

---

1 लुप्यते B　2 C adds कः स्वित्त वेद काः स्विदष्टा सप्तनिः त्रिशते तस्मिन्त्संवत्सरे मिते सौर्यो मासोऽथ चान्द्रमसो नाक्षत्रो न विलुप्यते G1, G2 add कः स्वित्त वेद कः स विदृष्टा सप्तति त्रिशते तस्मिन्त्संवत्सरे मितो सौर्यो मासो नाक्षत्रो न लुप्यते; J, K add कः स्वित्तं वेद कः स विदष्टा सप्तनि त्रिशते तस्मिन्त्संवत्सरे मितो ( मिते K ) सौर्यो मासोऽथ चान्द्रमसो नाक्षत्रो न लुप्यते.　3 त्रिकाकर्तृश्चा० B; G1, G2 omit त्रिकद्रुका० ˙˙ ०प्लवं च.　4 दृष्ट० G1, G2, J. (K had originally दृ which is changed into ई).　5 सत्रो० ˙˙˙ वृत्वा wanting in G1, G2, J　6 ०णा अनिष्ट्वा B.　7 मोमोप्यग्निप्राधाय ए० B.　8 ०सानीयान्नात्नृ० C.　9 षष्ठ० C, पृष्ठ्य is wanting in J, पृष्ठ० K.　10 ०कर्णां B　11 ०हिनिका० G1, G2, J, K　12 यद्यु C, G1, G2, J, K.　13 ०सन्धे० B.　14 ०नानिष्द्वा C　15 ०दाहि० B　16 ०पाकैरनाहि० C, G1, G2, J, K

तदपि शश्वद्ब्राह्मणं भवति—यथा पररथेनाध्वानमियादेवमेष स्वर्गं लोकमप्येति यः पराग्निषु दीक्षित इति।

अथापि ब्राह्मणं भवति—तेषां ये पुरोडाशिनः स्युरपि ह्यपुरोडाशिनो भवन्तीति[1] वार्थो भवति।

एतेनानाहिताग्नीनां सत्रासनमुक्तम्।

अथापि ब्राह्मणमेव भवति—तेषां ये[2] पुरस्ताद्[3]दिदीक्षाणाः स्युर्य[4]द्यु वैषां गृहपतिरिति।

अपि ह्यदिदीक्षाणा एव भवन्तीति[5] वार्थो भवति।

एतेनानिष्टप्रथमयज्ञानां सत्रासनमुक्तम्॥ १३॥

---

1 ०न्तीतीवा० C, G1, G2, J. 2 Wanting in G1. 3 ०ाद्दीक्षणा B, ादीक्षमाणः G1, G2, ०ादीक्षाणाः J; ०ाद्दीक्षाणाः K. 4 यदीक्षणा G1, यदीक्षाणा G2, K. 5 ०तीतीवा० C, G1, G2, J, K.

## अथ षष्ठः प्रपाठकः

अथापि समाहारसिद्धिसत्त्रं भवति ।
तदेतत्समरूपमग्नयस्तावद्द्रव्याणि च ।
मन्त्रैर्वेयमिति ।
अथापि यदेतच्छाण्डिल्यायनीयं गृहपतिस्तदातिगृह्णीते ।
अथ कः पृष्ठशमनीयः स्यादिति ।
याथाकामी पथ्यानां दक्षिणावतामिति वार्षगण्यः ।
अनारभ्य वदति, तस्मादुदवसाय दक्षिणावता यजेतेति ।
अथापि पृष्ठशमनीयं नाम क्रतुमधीमहे ।
अथापि सारस्वतस्येष्टिरेव पृष्ठशमनार्थी भवति—तथा दार्षद्वततौरयोरिष्टिर्वा पशुर्वेति ।
ज्योतिष्टोम इत्यपरम् ।
अनादेशे कमन्यं प्रतीयामै ।
अथाप्याह—"या मितदक्षिणैव स्यादेष एव कार्यः" इति। PB. 16. 7.
अमितदक्षिणः खलु पृष्ठशमनीयो भवति ।
अथाप्येष सत्राणामाद्यन्तेषु दृष्टो भवति ।
अयमु खल्वन्ततम इति ।
अथाप्येष उच्चावचानामाहाराणामन्तेषु दृष्टो भवति ।
यथा चातुर्मास्येषु वाजपेये राजसूये संदंशवज्रयोरिति ।
यद्वेतत् सारस्वते दार्षद्वततौरयोरितीष्टिप्रायः स ह भवति ।

---

1 In C only. 2 ०स्तव C; ०मभेयस्तव G1, G2, J, K. 3 अय J, K. 4 यथैतच्छा० C, G1, G2, K; यथेतछा० J. 5 ०तथा विगृ० C; ०तथा० G1, G2, J, K. 6 B, K add न. 7 तथापि G1, G2, J, K. 8 ०नार्थो C, G1, G2, J, K. 9 प्रति० B. 10 ०यान G1, G2, J, K. 11 ०ण उ ख० C; ०णत उ ख० G1, G2. 12 संदशपयवयो० B; संदश्वज्रयो G1, G2. 13 दार्षत इति तद्वत तौरयोरिरी (०ती G2) ष्टि० G1, G2; दार्षद्व० K. 14 संभ० G1, G2. 15 C, J, K omit ह.

सुं[1]त्याप्राये तु ज्योतिष्टोम एवाभिरूपतर इति ।

तदपि शश्वद्ब्राह्मणं भवति—तस्मादुदवसाय ज्योतिष्टोमेनाग्निष्टोमेन रथन्तरपृष्ठेन सहस्रदक्षिणेन पृष्ठशमनीयेन यजेतेति यजेतेति ॥ १ ॥

[2]षष्ठः पटलः

अथात एकाहाः ।

तेषां यानि ज्योतिष्टोमानि द्रव्याणि[3] तानि, यों[4]न्यन्यान्युक्तान्वयानि तानि, बृहत्पृष्ठेषु ।

अन्यत् तन्त्रं करोति ।

बृहदेकाहेषु स्थानवच्चिकीर्षन्, अस्य प्रत्नां माध्यन्दिनीयाम्, एषा संरूपिता बृहतेति ।

यस्तेमदामार्भवीयाम्, एषा वार्हतादद्ग इति ।

अथ यत्र सा[5]र्वचिकीर्षा भवति परिस्थानां तत्रार्भवीयां करोति ।

तदाहुः—परि[6]स्थानैवैतस्य तन्त्रस्य पुरार्भवीया बभूव, तां सा[7]नुर्वाराहिरपनिनाय, आपडहमात्रो भवतीति ।

सैषा तयो[8]र्वाक्संहिता प्रोच्यते ।

[9]अतो यान्यन्यानि द्रव्याणि वार्हतलिङ्गानि वा तानि भवन्ति, वार्हतेभ्यो[10]ऽह्नोभ्योऽयं सोम इति ।

माध्यन्दिनान्तीया वार्हतलिङ्गाः सूर्यवत्य आर्भवान्तीया दशमा[11]दन्त्यान्विताः, अन्तो हि वार्हत्पृष्ठं[12]यमिनि ।

एतद् गोस्तम्भमित्याचक्षते—

अथ यत्र ज्योतिष्टोमे तन्त्रे बृहत्पृष्ठं तद्राजयज्ञेषु ।

बृषा शोणा भवति, बृषा हि राजेति ।

व्रात्यस्तोमानां च ज्येष्ठयज्ञे राजजातीयत्वादेव ।

एतस्मिन्नेव तन्त्रे बृहत्पृष्ठे सूर्यवत्यः ।

न चेच्छन्दोमे[13]विलोपः, उत्तमाद्वा पृष्ठात् ।

ते[14]दार्भवे[15] स्तोमे[16]प्रत्यवरोहः प्राग्ज्योतिष्टोमवि[17]चारेभ्यः ।

एतयोस्तन्त्रयोः समासमुभयसामतन्त्रमित्याचक्षते—

प्रतिलोममग्निष्टोमेषु, अनुलोममुक्थ्येषु ।

---

1 सुत्या॰ G1, G2, K. 2 In B only. 3 C, G1, G2, J, K add नित्यानि. 4 यानि न्यायानि यान्युक्तानि B. 5 सार्थिचिकीर्षा Cक; साध्वी चिकीर्षा Cख, G1, G2, J, K 6 परिस्थानौ वैतस्य G1, G2, J 7 ॰सन्ववांत्राभिरूदनिधाय B ॰सानुर्वाहिरप॰ G1, G2, J. 8 ततोर्वा॰ B. 9 ततो B. 10 ॰भ्यो वाह्नो॰ C, K, ॰भ्यौ वाह्नो॰ G1, G2, J. 11 दशमादन्तान्विता C, K, दशमदन्तान्विता G1, G2, J. 12 ॰ष्ठ॰ C, G1, G2, J, K. 13 ॰मपि वि॰ G1, G2, J. 14 आर्भ॰ C, G1, G2 J, K. 15 ॰र्भवतो स्तो॰ G1, G2, J, K. 16 स्तोम प्र॰ C. 17 ॰विकारे॰ B

अग्निष्टोमभक्तिर्हि स्वादिष्टा, उक्थ्याभक्तिर्यस्तेमदा।

अथ यत्रैकर्चो माध्यन्दिनीया भवति

"इन्द्रायेन्दो मरुत्वते" इति SV. 1. 472; 2. 426; RV. 9. 64. 22; PB. 13. 9. 1.

तत्र करोति, एषा सामान्या तृचप्रथमा मरुत्वतीति।

अथ यत्रान्ये माध्यन्दिनीयार्भवीये भवतः, कल्पसमायाणि च द्रव्याणि, तदाहीस्तन्त्रमित्याचक्षते।

अथ यत्तदभिवादि द्रव्यं भवति, यत्कामः क्रतुः, तत् कल्पसमायमित्याचक्षते।

तदेतत् सार्वक्रतुकम् ॥ २ ॥

"अथैतानि बृहद्रथन्तरयोर्विभक्तानि स्थानान्यपीतरेतरस्य तन्त्रं गच्छतोः प्रतिपदाज्यानि ब्रह्मसामौष्णिहमिति।" Ārs. K. V. 18a.

अभीवर्त्तं तु राजयज्ञेषु भ्रातृव्यस्याभिवृत्त्यै, भ्रातृव्यवान् हि राजेति।

यत्र वोभयसामा सन् रथन्तरपृष्ठोमा नौधसेन बृहतः प्रत्याहारोऽभूदितीव, यत्र वा प्रजापतिप्रवाद एकाक्षरणिधन एकः प्रजापतिः, यत्र वाहर्गणस्य नाना ब्रह्मसामानि चिकीर्षति, तत् प्रथमेऽहनि करोति, अक्षरनिधनानां प्रथममायतनमिति।

श्रायन्तीयं प्रायश्चित्तार्थेनैव भवति।

"अथ यत्रान्यदग्निष्टोमसाम भवति, तद्यज्ञायज्ञीयमनुष्टुभि भवति", एष नेदिष्ठे चतुष्पद आवाप इति। Ārs. K. V. 50b.

अथ यत्र श्यावाश्वं प्रच्यवते तद्रथन्तरपृष्ठेषु ध्रुव्यं निह्नवानुप्रहार्य, व्रात्यस्तोमेषु च व्रात्यानामुपहवाय।

अथ यत्र स्तोमप्रत्यवरोहस्तद् बृहत्पृष्ठेषु पौष्कल२ रोहद्वयन२ ध्रुव्य२ स्तोमप्रत्यवरोहे न चिकीर्षति।

विषमेषु स्तोमेष्वभिलोमा राथन्तरेषु परीतां बार्हतेष्वेते राथन्तरबार्हते इति।

तत्र गोआयुषोऽर्द्धे चतुर्ऋचस्थे कुर्वन्ति भाल्लविनः ।

चतुरस्तृचैकर्चान् व्यत्यासेन कालबविनः ।

अध्यास्यायामेकर्चौ, अद एकस्यां प्रथमायाम्, अदस्तिसृषु परासु, अदस्तिसृषु पूर्वासु, अदोऽध्यास्यायामिति शाट्यायनिनः ।

"तृचप्रथमायां वयमेकर्चं कृत्वा तस्मिन्नेव तृचे द्वे तृचस्थेऽध्यास्यायामन्तत एकर्चम्, ताꣳ शशकर्णक्लृप्तेत्याचक्षते ।" Ārs K. V. 26a.

इतरथोऽनाध्यास्यायां मध्य एकर्चाविभितस्तृचौ, यथैतदग्निष्टुत्पृषभ इति ॥ ३ ॥

विभक्तावुक्थप्रणयौ, प्रमꣳहिष्ठीयवन्ति राथन्तरेषु, साकमश्ववन्ति बार्हतेषु, उद्वꣳशीयान्तान्युभयेषां पङ्क्त्यनुग्रहाय ।

अथ यत्र चतुर्थो भागः भर्त्युपशेने नार्मेधं वा नार्मेधसदृशं वोक्थान्तेषु चिकीर्षितं भवति ।

अथैतौ विश्वजिदभिजितौ पृष्ठ्यपृष्ठ्यस्तोमयोरन्तस्य वेति शाण्डिल्यः ।

पृष्ठ्यस्तोमस्याभिजित्, पृष्ठ्यस्य विश्वजित्, पृष्ठ्यदशरात्रयोरित्येके ।

एतेनैवानुपूर्व्येण बृहद्रथन्तरपृष्ठमभिजितं पृष्ठ्यस्तोमन्यायेन, रथन्तरमग्निष्टोमसाम, रथन्तरभक्तिरयं भवति पूर्वत्वान् ।

तद् बृहता नोध्यशिशायपिपीज्ज्योतिष्टोमं[12] तन्त्रं पूर्वत्वात् ।

तत्र यान्यभिवन्त्यभिरूपाणि तानि जितिप्रवादानि ।

"उभयोरभिजितोऽतिरात्री भवतः ।

ब्रह्मेण आज्यमुद्धरति, आर्षभस्तोभीयं मौं संश्चीचरन्" इति । Ārṣ. K.V. 52b.

सञ्चारयेदिति धानञ्जय्यः ।

किꣳ हि [16]योऽह्नो रात्रिमुपसञ्चारयेदिति ।

न सञ्चारयेदिति गौतमः ।

असञ्चारकुशला यज्ञा भवन्ति ।

तत्रैनन् करोति ।

'अभि प्र गोपतिं गिरा' SV. 1. 168; 2. 839; RV. 8. 69. 4.

इत्यभिवतः स्थानेऽभि[1]वत्सुझानम्।

उष्णिाहि रथन्तर[2]भक्तित्वान्न शुध्यं चिकीर्षति, नो पौ[3]ष्कलं बृ[4]हति पृष्ठे।

तत्रैतत् करोति, उभयभक्तिमिश्रनिधनꣳ सर्वपृष्ठं विश्वजितꣳ रथन्[5]तरं मध्यन्दिने बृहदग्निष्टोमसाम।

एवमिव ब्राह्मणं भवति—यद्रथन्तरं प्र[6]थमं बृहदुत्तमं मध्य इतराणीति ॥४॥

वैराजꣳ होतृषाम।

एतद् बृहत् परोक्षम्।

एतच्चैषामे[7]कनिधनम्।

एकनिधनानि होतृषामाणि भवन्ति।

महानाम्नी मैत्रावरुणसाम।

एता [8]अनुक्ता वामदेव्यस्थानेऽभिरूपाः।

वैरूपं ब्रह्मसाम।

एतत् सर्व[9]बृहतीषु।

सर्वबृहतीप्रायाणि ब्रह्मसामानि।

एवं च स्वस्तोमानि भवन्ति।

रेवतीरच्छावाकसामा [ स्वस्तोमा ] [10]अप्रदाहाय गायत्रीष्वग्निष्टोमसाम।

एवमिव ब्राह्मणं भवति—"यद्गायत्र्यो भवन्ति तेनाऽऽयतनान्न[11] च्यवन्ते" इति। PB. 16. 5. 27.

तासामेकविꣳशत्यक्षरा प्रथमा।

तेनैकविꣳश्यां न च्यवन्ते।

कथं धर्मा इति।

अकर्तव्या इत्येके।

[12]अस्वस्थानानि हि भवन्ति, स्थानस्था धर्मा इति।

कर्त्तव्या इत्याचार्याः।

संयुक्तानि भवन्ति, संयुक्तधर्मा इम इति।

अथापि कृत्स्नान्वितान्याशीःसाधकतराणि भविष्यन्तीति।

अथापि शिथिलानि [13]प्रतिलोमानि परोक्षपृष्ठानि, तेषां धर्मकरणेन दृढीभावो भविष्यतीति।

---

1 ०भ० G1, G2, J. 2 ०न्तरेभ० B. 3 पु० B; पो० J. 4 इहत्य० G1, G2. 5 ०रमा० G1, G2, J, K. 6 प्रथं B. 7 G1, G2 omit मेकनिधन. 8 अयुक्ता B 9 Wanting in B. 10 अप्रदाहाय C; अप्रवादाय K. 11 ०तनान्न च्य० C, K, ०तान च्य० J. 12 स्व० C, स्था० G1, G2, J, K. 13 Omitted by C, G1, G3, J, K.

अथाप्य[1]स्वस्थानानि, तेषां धर्मकरणेन स्वस्थानानी[2]ति चिकीर्षा स्यादिति ।

अथापि विश्वजिच्छिल्प इत्याचक्षते ।

धर्माणामेतद्यच्छिल्पानीति ।

अथापि संशयेऽलोपो लोपान्न्यायतर इति न्यायतर[3] इति ॥ ५ ॥

सप्तमः[4] पटलः

अथ[5] कथ[6]मङ्गभूतस्य परिवासा इति ।

कर्तव्या इत्येके ।

विहिता अप्रतिषिद्धा भवन्तीति ।

अथाप्येवं पृष्ठधर्मैः समाधिरिति ।

अकर्तव्या इत्यपरम् ।

सर्ववेदससंयुक्ता[7] भवन्ति[8] ।

अपि[9] चैते[10] खल्वङ्गभूता[11]ः सर्ववेदसमिति ।

ते खल्वेते धर्मा एतस्मिन्नेव द्वादशाहे स्युरिति गौतमः ।

अत्र हि संवत्सराप्तिं वदतीति ।

ऊर्ध्वं द्वादशाहात् सांवत्सरिकाणीति धानञ्जय्यः ।

कामं तु छवी द्वादशाहिकी[12] स्यादिति ।

बार्हतं[13] तन्त्रं बृहद्भक्तित्वाद् यत्र कालेयं प्रच्यवते[14]ऽनुजिघृक्षितं तत्र[15] भवति ।

तर्ह्य[16]न्मध्यन्दिनेऽत्रा[17]स्य स्वच्छन्द इति ।

सत्रासाहीयं[18] ककुभि सोढ[19]वन्नाम जितिनामस्विनि भवति ।

"सर्फ[20]श्रुध्ये यदतिरात्र इति तु भवत्यतिरात्रः सेन्[21] कृत्स्नीभवति, सफी भवति[22] तस्मात् सफीभवतः सफं वा[23] वि[24]ख्यापयिष्यत् ।" Ārs. K. V. 53 a.

तदेक उक्थप्रणये कुर्वन्ति सोढवन्नाम मा प्रच्योष्टेति ।

पिपीलिकामध्यां करोति दशरात्रन्यायेन ।

तां नित्यायाः पुरस्तान्निदधाति ।

एवं पथ्यावसानमिति ।

---

1 तयाप्य॰ G1, G2, J. 2 ॰स्थानेनि G1, G2, J. 3 J does not repeat न्यायतर इति. 4 In B only. 5 Wanting in C, G1, G2, J, K. 6 कथ मङ्गलभू॰ G1; कथमङ्गलभू॰ G2, J, K. 7 ॰क्तास्ते C, G1, G2, J, K. 8 ॰न्तीति K. 9 B has अपेत् नु for अपि चैते. 10 चैव ते G1, G2 11 ॰भूतान् B. 12 ॰शहिकी C; ॰हिका J. 13 ॰तं तन्त्र C, J, K. 14 प्रच्यवान॰ G1, G2, J, प्रच्यवान॰ K. 15 Wanting in K 16 तन्म॰ G1, G2, J, K. 17 ॰न मैत्रास G1, G2, ॰ने मैत्रास्य J, K. 18 सत्रासा॰ G1, G2, J. 19 सोढभवन्नाम जानि॰ G1, G2, J. 20 सफमध्ये G1, G2, J, K. 21 स G1, G2 22 Wanting in C. ॰फि॰ B. 23 ना G1, G2, J, K 24 विच्यावयिषेत् C, G1 G2, J, K

तद्यत्र गेणीचिकीर्षा प्रजापतिकामो वा, एवमेवैष तस्मिन् स्थाने भवति ।

तत्र वामदेव्यं पृष्ठेभ्यः प्रच्युतमनुगृह्णाति, वामदेव्यभक्तिर्ह्यहन्युत्पन्नमिति ।

वारवन्तीयं सर्वपृष्ठेषु चिकीर्षितं रेवतीसंयोगात् ।

तद्वद् द्विपदासु द्विपदाभक्तिर्ह्यहन्युत्पन्नमिति ।

अनुतन्त्रमुक्थप्रणयौ नाना षोडशिसामनी करोति ।

नानात्वैर्थो नानदमभिजितीति, एतस्य पूर्वाभ्यर्थेनेति ॥ ६ ॥

अथ व्रतस्य स्तोत्रप्रदेशः—

पञ्चविंशतिस्तोभाः पञ्चकृत्वः [पदं पञ्चकृत्वः] पूर्वा देवता पञ्चकृत्व उत्तरा ।

अथाप्याहुः—व्यवस्तोभेत् पदद्वैतम्, एवं समाधिः पदद्वैवतस्येति ।

एते वापि दैवते व्यवस्तोभेदित्येके ।

एवं समाधिर्देवतयोरिति ।

एते वाप्यर्द्धदेवते व्यवस्तोभेदिति शाण्डिल्यः ।

अथ कालवविनो यथासमाम्नायमेव कुर्वन्ति ।

एतच्चैषां लघिष्ठम् ।

अपि [च] यान्यनुपदंस्तुब्धानि आदंशयतीति तेषामुभयतः स्तोभात् सकृन्निगदा एवास्य पुरस्तात् स्तोभा भवन्ति ।

यत्त्वेनान् प्रथममवोचाम तत् कर्म ते खलु शश्वदेक आत्मना प्रतिपद्यन्ते, आत्मसत्तमान्यङ्गानीति ।

शिरसा वयम्, शिरो वा अग्रे सम्भवतः सम्भवतीति भवति ।

अथैके शिरसा स्तुत्वा, अथ दक्षिणेन पक्षेण, अथात्मना, अथोत्तरेण पुच्छेन, एवं मध्य आत्मा भवतीति ।

अथैके शिरसा स्तुत्वा, अथात्मना, अथ पक्षाभ्याम्, अथ पुच्छेन, एवं सम्यगवयवस्यानुक्रमश्च भवतीति ।

अथैके शिरसा स्तुत्वा, अथ पक्षाभ्याम्, अथात्मना, अथ पुच्छेन, एवमिवाङ्गानामानुपूर्व्यमिति ।

अथ यथैतद् विहृत्य स्तवने तद्व्ययम् ।

एतद् ब्राह्मणवदित्यृश्यस्य साम्नि ।

किं प्रत्यक्षं किं परोक्षमिति ।

"ह्रस्वं प्रत्यक्षं द्राघितं" परोक्षम् । अपि वेन्द्रेति प्रत्यक्षम्, इन्द्र इति परोक्षम् ।" Dh. Dr. Ś. 10. 1. 20; cp. Sāy. PB. 5.4.15.

अपि वा यथाम्नामं एतदङ्गमाचष्टे तत् प्रत्यक्षम्, तस्यैषा स्तुतिः स्यात् ।

तंसरमिव ते पायुक्रंजुरनौस्कन्ध इति ।

यथा समाम्नायमेवोपेयुः ।

एवमिव ब्राह्मणं भवति—"यद्वै मनुष्याणां प्रत्यक्षं तद्देवानां परोक्षम् ।" PB. 22. 10. 3.

अथ यन्मनुष्याणां परोक्षं तद्देवानां प्रत्यक्षमिति ।

तत् कुशलं यदस्मिन्नहनि, देवप्रत्यक्षं कुर्युः ।

तत्र खलु गोस्तन्त्रं करोति ।

एतदन्तं तन्त्रतरमन्तंचरमिदं भवति ।

तत्र यो द्रव्यविकारो निर्वाकार्थे न सम्भवति ।

अथापि प्राजापत्यं व्रतम्, अनिरुक्तः प्रजापतिरिति ।

अथाप्यन्नाद्यस स्तावानि, अंम्नोक्तं व्रतमिति ।

स्तोमकल्पाय चतुर्ऋचमाहरति ।

तैषदेतद् 'यवंयवं नो अन्धसा' इति, SV. 2. 325; RV 9. 55. 1.

एतद्यवप्रवादं पुष्टिप्रवादम् ।

अन्नाद्यसंस्तावमश्नोकेऽभिरूपम् ।
अराघोधीयमुभयसामस्तु चिकीर्षितम्, उभयविधेनिधनं हि भवति ।
तच्चाग्नेययोन्यन्नाद्येसंस्तावमश्नोकेऽभिरूपम् ।
"ऐकाहिकाद् व्रतात् पञ्चनिधनं वामदेव्यमपनयति," नानाह्वामतिमेद- नायेति भवति । Ārṣ. K. V. 53 b.
तदेकाहे नोपपद्यते ।
यज्ञसामान्याद्हीनेभ्यः, तत्र श्यैतमनुतन्त्रम् ।
'आ नो विश्वासु हव्यम्' इति । SV. 1. 269; 2. 842; RV. 8. 90. 1.
एता ब्रह्मप्रवादा इति ।
"इलान्दमग्निष्टोमसाम कुर्वन्तस्तृचे कुर्युः ।" cp. LŚ. 10. 9. 6.
एष आवृत्तिन्याय इति ।
"दशसु दशस्वक्षरेष्वार्चिकान्यनुगानानि ।" cp. LŚ. 10. 9 7.
एवं वैराजान्यनुगानानि भविष्यन्तीति ।
"षड्ऋचे सर्वस्मिन्नित्याचार्याः ।
अर्द्धर्चेष्वनुगानानि, एवमसंरोधतरो गीतानाम् ।" इति । LŚ. 10. 9. 8.
"द्वादशर्चे इति शाण्डिल्यः ।
तत्रापरावाग्नेयौ तृचावाहरेत् ।
'आ ते अग्ने' SV. 1. 419; 2. 372; RV. 5. 6. 4; PB. 13. 6. 1.
'अग्निं तं मन्ये' । SV. 1. 425; 2. 1087; RV. 5. 6. 1.
एवमृग्दृष्टीन्यनुगानान्यृक्षु भविष्यन्तीति ।" cp. LŚ. 10. 9. 9.
षड्ऋचे तु कुर्वन्ति ये कुर्वन्ति
'अग्ने तव श्रवो वयः' इति । SV. 2. 1166; RV. 10. 140. 1. LŚ. 10. 9. 6.

चतुर्थमेवानुगानं तृचे स्यादिति वार्षगण्यः । LŚ. 10. 9. 10.
अत्र हि निधनवादं वदति—व्रतमिति भवति, स्वरिति भवति, शकुन इति भवतीति । LŚ. 10. 9. 10.

1 ॰धेरेव C, ॰धेहं च G1, G2, J K. 2 तदाग्ने॰ C, G1, G2, J, K. 3 ॰रं॰ G1, G2. 4 एकाद् B. 5 ॰पव्ययति G1, G2, J. 6 नानामहा॰ C, G1, G2, J, K. 7 तस्यैतमनुतन्त्रम् G1, G2, J. 8 ॰प्रवादद् C. 9 अवर्ति॰ B. 10 भवन्तीति G1, G2, J, K. 11 अध्यर्चे॰ B. 12 ॰शार्चे C. 13 ॰आहा॰ B. 14 Wanting in C, G1, G2, J, K. 15 ॰गाना G1, G2, J. 16 Omitted by G1, G2, J.

"भक्तयश्च कर्[1]पन्ते, नानासामवचैनान्येकेऽधीयत इति" ॥ ७ ॥ LŚ. 10. 9. 10.

अथ साहस्राः ।
त्रिरात्रास्ति च व्रतास्ति चोपकृताः ।
एवमिव ब्राह्मणं भवति—तत्र त्रयाणां सम्पद् ब्राह्मणचोदिता ।
तद्[2]उपकृता एते स्तोमा भवन्ति ब्राह्मणविहिताः ।
तृतीयस्योभे सामनी करोति—व्रतन्यायेन, त्रिरात्रन्यायेन च ।
व्याख्यातमौभयं तत्त्रयम् ।
पूर्वयोः पङ्क्तिषु ब्रह्मसाम यत् सं[3]हस्राक्षरासु ब्रह्मसा[4]मेति ।
एवमक्षरसहस्रं सम्पद्यते ।
बार्हतं तन्त्रं तृतीयस्योक्थ्यत्वात् ।
"अग्निं दूतं वृणीमहे" इति ।　　SV. 1. 3; 2. 140; RV. 1. 12. 1; PB. 11. 7. 3.

उभयान्याज्यौ[5]नि ।
तत्र "पूर्वे बार्हत उत्तरे राथन्तरे इति शौचिवृक्षिः ।" Ārṣ. K. V. 54 b.
एवं समविभागो दे[6]वतानामिति ।
"एकदेवत्ये बार्हते, द्विदेवत्ये राथन्तरे इति धानञ्जय्यः ।"　　Ārṣ. K. V. 54 b.

एतद् द्वयोः समवयतोः कुशलं यद्[7]व्यत्यास इति ।
व्याख्या[8]तं श्रायन्तीयम् ।
अपि चैकादशाक्षरशतानि सम्पद्यते ।
तत्र नित्या सहस्रसम्पत्, मौक्षमुक्थ्येषु चिकीर्षितम्, उक्थ्यदर्शनं च ।
अपि च त्र्यक्षरणिधनं त्रीण्युक्थ्यानीति ।
सौभरं त्रैककुभं वेति विचारयन्ति ।
नित्यं[9] हि सौभरं श्रायन्तीये[10]नियोगात्, उद्वंशीयनियोगाद्वा त्रैककुभमिति ।
त्रिरात्रवि[11]धे उत्तमः, त्रि[12]रात्रिक्यः प्रतिपदश्चाज्यानि च ।
पं[13]चत्रैरात्रिकम्—

---

1 कल्पन्ते LŚ. 2 न उप C, G1, G2, J. 3 सा K. 4 ॰साम्येति G1, G2, J, K. 5 ॰नीति K. 6 देवाना॰ G1, G2, J, K. 7 यदभ्यास C. 8 ॰तोः आ॰ G1, G2, J, ॰ताः श्रा॰ K. 9 ॰समह: सौ॰ C; ॰स्मह सौ॰ G1, G2, J, K. 10 ॰यणो॰ B, K. 11 ॰विधतम उ॰ C, G1, G2, J, K. 12 त्रैरात्रेभ्यः B. 13 पकर्मात्रिरात्रिकम् C, K; पकमत्रिराकन् G1, G2, J.

'इन्द्रमिद्गाथिनो बृहद्' इति। SV. 1. 198; 2. 146; RV. 1. 7. 1; PB. 11. 7. 3.

तद्यत् करोति पृष्ठमध्यविभाजयिषीत्।

ज्यौतिष्टोमं तन्त्रम्, विभ्रंशाशङ्कस्त्रिरात्रे।

एतत् प्रतिष्ठाविधर्तारं तन्त्रयोरिति।

ककुभं माध्यन्दिनमुपाहरति।

ईमामुपरिष्टाद् गायत्र्या निदधाति।

एवमियममुत्र गायत्र्यानन्तर्हितेति।

तस्याः स्थाने द्विपदां करोति पुरुषच्छन्दसः पुरुषच्छन्दस इति।

सतोबृहतीं करोति।

त्रिरात्रन्यायेन तां नित्यायाः पुरस्तान्निदधाति।

एवं पथ्यावसानमिति।

तद्यत्र गणीचिकीर्षा [वा] प्रजापतिकामो वा, एवमेवैतानि छन्दांसि युज्यन्ते।

आष्टमिकीस्त्रिष्टुभः करोति।

एता रूपसम्पन्ना इति।

तत्र वामदेव्यं करोति।

एवं हि ब्राह्मणं भवति—"पवमानस्यान्त्यं वामदेव्यम्" इति। PB. 16. 11. 3.

स्वारं सौपर्णं मैत्रावरुणसाम, एतद् वामदेव्यसदृशम्।

अपुरस्तात्स्तोभं बहिःस्वारं यथा वामदेव्यम् ॥ ८ ॥

अथ साद्यस्क्रेषु याः सद्यःप्रवादा नवप्रवादाः प्रोक्तवत्यो जनद्वत्यस्ता अभिरूपाः।

अथ खल्वत्र पृष्ठान्यज्ञाश्चिकीर्षिता भवन्ति।

आमहीयवान्ततो यदंतुप्रत्ययानि पृष्ठानि परिवाचनार्थानि तानि।

यद्य साक्षादस्वस्तोमान्यभविष्यंस्तत्रैतच्छाक्वरवर्णं शक्करीभ्यः प्रतिवैष्टम्भं वैरूपात् साक्षाद्रथन्तरं क्रियते।

---

1 ०मत्य० C, G1, K; ०मन्य० G2, J　2 ज्यो० B　3 ०धरं G1, G2, J; ०विधविधर K.　4 तामुप० C, G1, G2, J, K.　5 ०मुत्र G1, G2, J, K.　6 ०तेनेति C, ०हिते G1　7 तस्य B.　8 Wanting in C.　9 निधने C; C adds वैरूपात्साक्षाद्रथन्तरं क्रियते ( line 27 ) सौभरं बृहतो वारवन्तीय रैवतीभ्यः ( p. 107. 1 ).　10 गुणी० B, G1, G2, J.　11 Wanting in B.　12 ०ष्ठः B.　13 पु० B.　14 ०भमेव C　15 पृष्ठय० C.　16 आमाभिमानितो C, G1, G2, J, K.　17 यदृतु० C, J, K. मृतु० G1, G2.　18 ०या० C, G1, G2, J.　19 ०र्थानीति C; ०र्थानानि G1, G2, J, K.　20 ०स्तस्तैत० C.　21 ०म्भवै० C.

सौभरं बृहतो वारवन्तीयꣳ रेवतीभ्यः स्वाशिरामर्कौ वैराजादायोस्य-मुष्णिहि।

मध्यन्दिने से[2] दक्षिणां प्रतिगृह्य विभ्रꣳशे[3] स तृतीयसवने प्रायश्चित्तं[4] चक्र इति।

कथमुत्तरयोः साद्यस्कधर्मा इति।

कर्तव्या इत्येके।

साद्यस्कैश्चाभिपरीतौ[5] भवतः।

अपि चैते[6] कालसङ्कर्षाद् भवन्ति।

सङ्कृष्टकालाविमौ भवत इति[7]।

[8]अकर्तव्या इत्यपरम्।

[9]असाद्यस्कौ हि भवतः।

यद्धेतदभिपर्ययाद्[10]इति, सर्वं एवासाद्यस्कैरभिपरीता भवन्ति।

यद्धेतत् कालेसङ्कर्षाद्[11]इति[12], उच्चावचाः[13] कालविप्रकर्षा एकाहानाम्[14] तदेवं बहु प्रसज्येतेति।

विश्वजिच्छिल्पे सोमस्तोमे[15] सति साध्यासां बृहतीं करोति।

कस्य हेतोरिति।

पुरस्तादापन्नानि वैश्वजितान्य[16]विच्याचयिपन्नविच्याचयिपन् ॥ ९ ॥

[17]अष्टमः पटलः

जिघाꣳसंचय[18] उत्तरः।

तत्र[19] या इतवत्सः कूराणि च[20] सामान्यभिरूपाणि तानि।

त्रिकाण्याज्यपृष्ठानि करोति।

एवꣳ सुपराञ्चि भवन्ति। cp. LŚ. 8. 5. 12.

वज्रोक्तं च पञ्चदशमभिसम्पद्यन्ते[21]।

चतुरः पञ्चदशान्।

'अर्षा सोम द्युमत्तमः' इति SV. 1. 503; 2. 344; RV. 9. 65 19; PB. 13. 3. 1.

---

1 ◦दास्यवाद्यु◦ G1, G2. 2 G1, G2, J omit स. 3 ◦शेत्र C, G1, G2, J 4 ◦चित्ति C, G1, G2, J, K 5 ◦तो G1, G2, J, K 6 चेमे C, G1, G2, J. K. 7 Wanting in G1, G2, J. 8 कर्त◦ B, wanting in G1, G2, J 9 G1, G2 omit असाद्यस्कौ ... सर्वं एवा (line 12) साद्यः कौ J, K. 10 ◦र्यया◦ C. 11 काले स◦ B 12 ◦र्षा इति B 13 ◦वचा B, G1, G2, J. 14 एकानां G1, G2, J, K. 15 सस्ये स्तो◦ B. 16 ◦न्यविच्यावयिपत्र◦ C, G1, G2, J 17 In B only. 18 ◦चय C, ◦चश G1, ◦सञ्च G2, J. 19 ता B. 20 Wanting in K 21 ◦पन्ते B.

माध्यन्दिनीयं[1] भवति।

आह्वेयं[2] भवतीति[3] शाण्डिल्यायनः।

ऋुपर्युपेत्यर्थात्तु[4] स्नातकाः कुर्वन्ति।

भागविलोपे चोत्पन्ना भवतीति।

"पराचीषु रथन्तरम्" इति। ṢB. 3. 8.

द्विपदोत्तरासु स्यात्।

"एव[5] सुपराग् भवति।" cp. LŚ. 8. 5. 12.

"ककुभावेवेति गौतमः।" LŚ. 8. 5. 13.

अनभिर्विवर्त्तस्यैतद् ब्राह्मणमिति।

"पवमाने रथन्तरम्" इति उद्धृत्य बार्हतानि स्यात्। LŚ. 8. 5. 9; PB. 16. 11. 3.

अप्रेडश्च पदस्तोभः शाकरवर्णस्य त्रिणिधनानुग्रहाय शक्वरीणां च।

पवमानान्त्यं वा रथन्तरम्, तज्जामि।

एवमिव ब्राह्मणं भवति—"यद्वै महावृक्षौ सम्मृच्छेते बहु तत्र विभग्नं प्रभग्न[8] शेते।" इति। PB. 7. 6. 16.

यत्तु बाजामि यौधाजयस्थाने दैर्घश्रवसं यदन्तरा सोमायन्तीति।

उपरिष्टादनुद्धरन् वा बार्हतान्यनुकल्पयेत्।

"तत्र पौरुमद्गं तृचसमासंये भ्रातृव्यवध[9] ह्यस्मिन् ब्राह्मणं दर्शयति।" इति। cp. LŚ. 8. 5. 11.

यौधाजयं[10] [11]वोत्सेधमध्यं कृत्वा पवमानान्त्य[12] रथन्तरम्।

आन्धीगवंनिषेधो वृत्तिग्रहणात्।

वामदेव्य[13] सर्वाभिवादनार्थमिति धानञ्जय्यः।

प्लवश्चेद् ब्रह्मसाम स्यात्।

"त्वमिन्द्र प्रतूर्तिषु" इति। SV. 1. 311; 2. 987; RV. 8. 99. 5.

एतास्वेता रूपसम्पन्ना इति।

श्यैतीयासु[14] वा बृहत्पृष्ठत्वात्।

---

1 ॰नीया। C; ॰नाय (॰या J) इति। G1, G2, J; ॰नीयाइति। K. 2 मर्हेयं B. इन्ये C. 3 भवन्तीति C, G1, G2, J. 4 ऋपम्पृषेत्यर्थात्तु G1, G2, J, K. 5 ॰न्तोति K. 6 ॰मिनिव॰ J, K. 7 ॰प्रेडश्च C; ॰प्रेडश्च G1, G2, J. 8 ॰माषरे G1, G2, J, K. 9 भ्रातृम्यव॰ ध॰ C; भ्रातृवधं ज्ञा॰ G1, G2; भ्रातृवध॰ स्ता॰ J. 10 ॰जया G1, G2, J, K. 11 वैतां वोत्सेधमध्यमां B; पैतवोत्सेधमध्यां G1, G2, J, K. 12 ॰नारस्य नि॰ C, G2, J, K; ॰नारस्य निषेधो G1. 13 सर्वं वाभि पदनार्थं इति C, G1, G2, J, K. 14 श्यैतयोनो C, K; श्यैतयोयोगो G1, G2; श्यैतयो J

अथैष एकत्रिकः प्रजापतीप्सामुपकृतः ।
तत्रैतावुत्सेधनिषेधौ ।
प्राजापत्यादह्नो निषेधः ।
ब्रह्मसाम श्रायन्तीयस्यर्चि, एषा श्रितवती प्रायश्चित्तकृत्यैभिरूपेति ।
अतो यो द्रव्यविकारः प्रजापतीप्सया स भवतीति ॥ १० ॥

अथ व्रात्यस्तोमाः ।
तत्र षोडशाशीःस्तोमः ।
स एष द्वात्रिंशो विकृतः ।
तमच्छावाकसाम्नो निदधाति ।
एतदानुष्टुभं स्थानमिति ।
अनन्तरा द्वात्रिंशप्रयुक्तिर्भविष्यतीति ।
पवमानयोर्ज्योतिष्टोमानीतराणीति ।
तत्र या वीर्यप्रवादा बलप्रवादा द्रविणप्रवादाः शुचिप्रवादा निषण्णवत्यः पवित्ताभिव्याहारा अभिरूपास्ताः ।
यानि च गणसामानि निर्भूतयन्ति तत्र यश्छन्दोयोगविकारो गणीचिकीर्षया स भवति ।
अपि च क्षुद्रीचिकीर्षया ।
अथ खल्वाह—"यन्निरुक्तं निधनमुपेयुर्गृहपतिरेवध्नुंयादपेतरे ओम्प्रीति ।" इति । PB 17 1 8. cp LŚ. 8. 6. 5

कस्येदं ब्राह्मणं स्यादिति ।
नौधसप्रतिषेध इत्याचार्याः ।
तद्धि निरुक्तनिधनं भवति, नेदमिति ।
अथापरम् आ इन्द्रा इत्येवास्य निधनं निराहुः ।
तद्यत्तथा स्यात् तन्निरुक्तं स्यादिति ।
यथा समाम्नायं चैवं ।
एवमनिरुक्तमिति ।

1 प्रजा० J. 2 षा is wanting in G1, G2, J, K. 3 ०कृतोऽभि० C 4 भवति C, G1, G2, J, K. 5 विकृतः B, G1, G2, J, K. 6 ०भस्ता० C, G1, G2, J, K. 7 पवसा० C. 8 ०णी G1, G2, J, ०राणि K. 9 C, G1, G2, J, K add गणप्रवादाः. 10 पवि० C, G1, G2, J, K 11 हृत० C, G1, G2, J, K 12 ०रान् C, G1, G2, J, K. 13 प्रोतेति C. प्रोतीति G1, G2, J, K. 14 नौधस इति निषेध G1; नौधस इति निषेध G1, G2, J, नौधस इति षेध K. 15 ०नीति C, G1, G2, J, K. 16 तंनिरुक्तं स्यदिति G1, G3 । 17 त्वेव C, G1, G2, J, K

द्वावाग्निष्टोमस्तोत्रीयौ समामनामः ।
द्वये व्रात्या भवन्ति—शीर्षादयश्चैषीकपाविनश्च ।
शीर्षादीनां सतोबृहतीष्वग्निष्टोमसाम कुर्यादिति धानञ्जय्यः ।
ज्यायसस्तान् ब्रुवते—पैषीकपाविनां प्रगाथबृहतीषु केनो[6] विद्यादिति ।
स्वयं प्रब्रुवाणमिति ।
ज्यायांसः खलु शीर्षादयो ब्रुवते ।
एवं षोडश्युत्तरस्तं खलूक्थ्यं करोति ।
षोडशयोः स्थाने चिकीर्षंस्तावाद्यवसानयोर्निदधाति ।
एवं समाधिः पवमानाच्छावाकसाम्नामिति ।
कनिष्ठयज्ञ उत्तरः ।
ये तु खलु जन्मना कनिष्ठा ये[11] ह्यो[12] वयसेति ।
ये जन्मनेत्याहुस्तान् कनिष्ठा इत्याचक्षते ।
अथाप्याहुः—ये वयसा सखिचारिणो हि व्रात्या भवन्तीति ।
व्याख्यातौ षोडशावच्छावाकसाम्नोः, उद्धरति ध्रुव्यं स्तोमसंरोधात् ।
तत्र मरुतां संस्तोभं करोति[16] ।
मांशीःस्थानं मा प्रच्यौष्टेति विहरति श्यावाश्वान्धीगवे ऋचो वीप्सन् ॥११॥

ज्येष्ठयज्ञ उत्तरः ।
ये तु खलु जन्मना ज्येष्ठा ये ह्यो वयसेति तत् पूर्वेणैव व्याख्यातम् ।
तत्र दाशरात्रिकांश्च स्तोमान् उभे च सामनी करोति ज्येष्ठयज्ञं कृत्स्नी-चिकीर्षन् ।
अथापि द्वात्रिंशमांशीःस्तोमं साक्षाज्ज्येष्ठयज्ञेऽचिकीर्षीत् ।
स आदीयमानः सर्वान् स्तोमानादीपयेत् ।
तांस्तु यदेवं प्रयुङ्क्ते, एवमनन्तरेण रोहो भवति ।
अष्टाचत्वारिंशात् परस्तादन्तरिताविति त्रिणवत्रयस्त्रिंशौ ।

---

1 ०ष्टोमसम० G1, G2, J, ०ष्टोमनाम० K. 2 ०याश्चै० G1, G2, J. 3 ०या० C. 4 ०दीषां स यं मनीरन् ज्यायांसः कु० G1, G2. 5 ए० B, एषोकया वीणां C, J, K, पे''' G1, G2. 6 ०नोद् B, केनो दि is wanting in G1, G2. 7 ब्रु० G1, G2, J. 8 ०त्न् C, G1, G2, J, K. 9 षोडश इत्युत्तरस्तत्र C, षद् षोड (०डप K) इत्युत्तरस्तत्र G1, G2, J, K. 10 ब्रु B. 11 यो G1, G2, J, K. 12 हा G1, G2, J, K. 13 ०स्ते हि C, ०तान् हि G1, G2, J, K. 14 यथाहुः C, J; अप्याहुः G1, G2. 15 ०स्वंस्तोम C. 16 करोतीति G1, G2, J, K. 17 ०शीःस्तोम C; ०शीःसाम G1, G2, J, K. 18 प्रो० B, K. 19 ०भानी० B. 20 सुचा B. 21 व C, G1, G2, J 22 तथा० B. 23 G1, G2 omit समाशीःस्तो'''तां (line 23). 24 ०दापेद् C; ०दापे G2, J, K. 25 ०युक्त G1, G2, J, K. 26 ०नवकारेणारो० C, K; ०नवकरणे G1, G2, J. 27 भाष्टा० G1, G2, J, K.

अभिरूपोऽन्ते द्वात्रिंशो[2] वा चिकीर्षेन् ।

"कनीयांसौ स्तोमावुपागुः" इति नु भवति । PB. 17. 4. 3.

त्रयस्त्रिंशौद्द्वात्रिंशावितीवैतद् भवति ।

द्वे त्रिणवत्रयस्त्रिंशे द्वे द्वात्रिंशत्रयस्त्रिंश इति वा खलु तत् कुर्युः, सर्वान्वै वरुथानुपेयुरिति ।

अकुशलाऽनुव्याहृतान् कौषीतकीन् मन्य इति धानञ्जय्यः ।

एवं ह्येवैषु सत्सु रोहो भवति ।

तत्र यो रोहोऽर्थकारितः स भवति ।

कथमनिष्टप्रथमयज्ञानां व्रात्यस्तोमा इति ।

अकर्तव्या इत्येके ।

अनारभ्य वदति—"य एतेनानिष्ट्वा" इति । PB. 16. 1. 2.

अथाप्येषां ज्योतिष्टोमे[11] प्रतिपद् विधीयते ।

अथापि यथा नानाहिताग्नीनामेवमनिष्टप्रथमयज्ञानामिति ।

कर्तव्यौ[12] इत्यपरम् ।

प्रायश्चित्तार्था इमे भवन्ति ।

प्रायश्चित्तमु खलु पूर्वं विधीयते ।

अथापि ज्योतिष्टोम एव प्रायश्चित्तस्य पूर्वत्वं दर्शयति यथा कलशे दीर्णे विरिक्ते[13] सोमग्रावणि विशीर्णे[15] इति ।

यद्वेतत् "य एतेनानिष्ट्वा" इति, प्रकृतिभूतानामेतद् भवति । PB. 16. 1. 2.

यद्वेतत् प्रतिपद् विधीयत इति, इष्ट्वा व्रात्यस्तोमेनेत्येतदुपपद्यते ।

यद्वेतत् तद्यथा नानाहिताग्नीनामिति, सिद्धिकारितमेतद् भवति ॥ १२ ॥

अथाग्निष्टुत्सु या आग्नेय्यः पावकाभिव्याहारा ज्योतिष्टोमीभिः सदृशव्यञ्जना यथास्थानमभिरूपास्ताः ।

रुद्रवतीस्त्रिष्टुभः करोति ।

रुद्रो मरुतां पितेत्याहुः ।

---

1 ०रूपान्तो C. 2 द्वावि ‑शो C. 3 ०कीर्षित K. 4 ०शाद्वात्रि० G1, G2, K, ०शाद्वात्रि० J. 5 Wanting in J, K. 6 वारूदानुपे० C, G1, G2, वरुदापे J, वरुदानु० K. 7 एवं G1, G2, J, K. 8 रोहार्थं० B. 9 व्रात्यस्तोमा G1. 10 ०ष्टोमो मे B. 11 ०मप्यनि० C, G1, G2, J, K. 12 ०व्यता G1, G2, J, K. 13 ०ऽतिरि० B, K. 14 ०ग्रावापि C; ०ग्राव्णूपि G1; ०ग्रावपि G2; ०ग्राव्णुपि J, K. 15 शीर्णे C, दीर्णे K. 16 यद्वेतद् B; यद्वेतय G1, G2, J; तद्वेतद् K. 17 तद्दे० K. 18 पद् ' मिति is wanting in G1, G2, J, K. 19 पठिताभि० C; पवित्राभि० G1, G2, J, K

तेन मरुत्वदनुग्रह इति ।
गायत्रीष्वग्निष्टोमसाम ।
एतदाग्नेयच्छन्द इति ।
स यदेताः
'उप त्वा जामयो गिरः' इति, SV. 1. 13; 2. 120; RV. 8. 103. 13; PB. 16. 5. 1.
एता वायव्या इति ।
तत्रै वारवन्तीयं गायत्रीसामै, एडमृचा स्तोत्रीयम् ।
तेन प्रच्युतं यज्ञायज्ञीयमन्यं करोति ।
अत्र हि स तृचतां लभते ।
तदेतत् स्तोमसंरोध एवमेव भवति ।
ऐन्द्रीषु परेषां करोति ।
ऐन्द्री सुलेति ।
सोऽयं पूर्वः सर्वाग्नेयः ।
एकस्तोत्रं चिदैन्द्रं भविष्यतीति ।
स यदग्निष्टोमसाम, अन्तान्यानि कर्माणीति ।
सप्तदशे विषमे स्तोमे सत्यनभ्यासां बृहतीं करोति ।
कस्यै हेतोरिति ।
न ह्याग्नेयी साभ्यासा विद्यते ।
तस्यां चत्वारि सामानि ।
तृचावभित एकर्चौ, मध्य एवं तृचप्रायणम्, तृचोदयनं भविष्यतीति ।
त इमे पञ्चानुवाकाश्चत्वारः कल्पाः ।
स एष प्रथमः सर्वेषामेव सार्धः स्यात् ।
अपि वा प्रथमस्य द्वौ स्याताम् ।
कथं भक्त्या इति ।
आग्नेया इत्येके ।
एवं यथार्थं भवति ।
अथाप्यत्र सुविप्रतिषिद्धरूपाण्यनाग्नेयानि भवन्ति ।

1 B adds मे. 2 एवं तदाग्नेयं छ० G1, G2, J, K. 3 ०रेवा G1, G2, J, K. 4 Omitted by G1, G2, J. 5 ०सामैव संतृचस्तोत्रीया B. 6 ०मन्त्यं C, K, ०मन्यं G1, G2. 7 ऐन्द्री G1, G2, J. 8 Omitted by C. 9 Wanting in C. 10 सु० G1, G2, J. 11 पूर्व C. 12 स आग्नेय्यः C; सर्व आग्नेयं G1, G2, J. 13 एक is wanting in C. 14 कस्या G1, G2, J. 15 रि सामानि ... पश्चात् is wanting in G1. 16 सामनि B. 17 ०र्चौ C. 18 ०र्थं B. 19 ०प्यनाग्ने० G1, G2, J, K.

[ आ[1]ग्नेयानि यथा हविःस्तुतिः पवमाना इति ।
यथाप्रकृतीत्यपरम् ।
भक्ष्यविशेषान् विदधन्नाग्निष्टुत्सु विदधाति ।
अथा[2]पि कृतावेवायथार्थं भवन्ति । ]
यथा मैत्रावरुणाज्ये[3]ऽग्निष्टोमसाम्नीति ।
उत्तरेष्वग्नय इति स्थाने सुब्रह्मण्यायां देवा इति ब्रूयात् । cp. PB. 17. 5. 7.
ऐन्द्रत्वादग्निष्टोमसाम्न इत्येके ॥ १३ ॥ Ārṣ. K. V. 60 a.

---

1 आग्नेयानि ··· भवन्ति ( line 4 ) is wanting in B. 2 अपि B. 3 ०वरुण्य-साम्निष्टो० C, K; ०वरुण्यसाग्नेष्टो० G1, G2, J.

## अथ सप्तमः प्रपाठकः

अथ त्रिवृतः ।

तेषां [ प्रथमस्य ] यो द्रव्यविकारो निर्वाकार्थेन सं ह भवति ।

पुरोधाकामयज्ञ उत्तरः ।

स्थपतिसवो वायम्, समानाः श्रैष्ठ्ये संवृणीरन् । cp. PB. 17. 11. 6.

ब्रह्मसवो वा, ब्राह्मणस्य यज्ञेन जिज्ञनिंपमाणस्य त्रिवृतः स्तोमः सम्पद्यते ।

लघुरीप्सायामभिरूपोऽग्रस्तोमश्च, अग्रमेव गच्छति यः पुरोधां यः स्थापत्यम्, यस्य तु स्याद् ब्रह्मसव इति । cp. PB. 17. 11. 5.

एषा ब्रह्मणो भक्तिरिति ।

अनुसवनं दक्षिणा ददाति ।

कस्य हेतोरिति ।

बृहस्पतिरभिषिच्यमानो देवगणेभ्यो दक्षिणा आजहार ।

वसुभ्यः प्रातःसवने रुद्रेभ्यो माध्यन्दिने सवने आदित्येभ्यस्तृतीयसवनेऽश्वद्वादशा माध्यन्दिने ददाति । cp. LŚ. 8. 7. 6; PB. 17. 11. 2; Āp. Ś. 22. 7. 1–4. 7. 12; Kāty. 22. 17. 9; BŚ. 27. 1. 2.

दक्षिणा वेलायामन्याधित्सन् मन्यते ।

इयेनेनेषोर्द्रव्यसमुद्देश उक्तः । cp. LŚ. 8. 7. 12, Kāty. 22. 5. 30.

उद्धरति घ्राकरसुवर्णम् ।

---

1 In C only. 2 अथा G1, G2, J. 3 Wanting in B. 4 सम्प॰ G1, G2. 5 ॰ननो G1; सतो G2, J, K. 6 वदम् C. 7 मेशो Ca; मेप्स्नं Cu, G1, G2, J; मेश्वयं K. 8 Wanting in G1, G2. 9 ॰प॰ K. 10 ॰उर B. 11 ॰पो यः स्तो॰ C. 12 वसु॰ C, G1, G2, J. 13 Omitted by C. 14 म॰ C, G1, G2, J. 15 ॰या मर्यादीत्स B. 16 ॰न्या is suggested. 17 मते K. 18 इयेतेनेपोद॰ B, इयेनेतिपोषोद॰ G1, G2, J, K.

साचस्कसाम तद् भवति ।
तत्रैतज्जराबोधीयमेतद् गायत्रीसामापन्नम् ।
अपि च रुद्रेयवोनिवधार्थेऽभिरूपम् ।
उद्धरति वषट्कारनिधनम्, तस्य स्थाने ससहङ्करोति ।
एतद् बृहता समानयोनिंवधार्थेऽभिरूपम् ।
उद्धरति बृहत्, तस्य स्थाने वषट्कारनिधनम् ।
एषा देवेषुर्भवति ।
*तामाशीःस्थान ईप्सन्* ॥ १ ॥

संवस्वारे सप्तर्चनवर्चान् करोति, एते प्राणोक्ता इति ।
तेषां विलोपेन प्राणविलोपो भविष्यतीति ।
स यत् प्रथमांस्तृचान्, एते रूपसम्पन्ना इति ।
चतुर्ऋचमैन्द्राग्नं समामनामः ।
प्रवत्यासां द्वितीया, तामुद्धरति, सर्वाः प्रवत्यो भविष्यन्तीति ।
गायत्रीणां पृष्ठापदानाद् बृहतीषु मैत्रावरुणसाम करोति त्रिस्थानां बृहतीं पृष्ठेषु चिकीर्षन् ।

तत्रैकं मैधातिथं स्वयोन्यापन्नम् ।
पुरस्तादेतत् स्थानम्, अभिवतीषु होत्रिकपृष्ठानि स्वयोनीनि चिकीर्षन् ।
परागं बृहतीष्वग्निष्टोमसाम, पैरागनुप्रहरनेति ।
तौ यदावर्त्तयति, एवं प्रवत्या प्रक्रम इति ।
तत्र यज्ञायज्ञीयमन्तसमाधये ।
तस्यादरसंसङ्गेन प्रस्तावयति प्रगाथीकाराय पूर्वस्योध्वान्त्यं मेयापाश्वाचम् ।

एषोऽक्षरसंसङ्गः ।
तद्यत्र यत्रैतेषां तृचापत्तिर्बृहद्रथन्तरयोर्यज्ञायज्ञीयस्य चैवमेतेषां प्रस्तावयति ।

1 °यगायत्रोणाम° B 2 रुद्रदेवत्योरिव° B. 3 °निवधार्थे° C; °निधांध्ववधार्थे° G1, G2, J; °निर्धांत्वधार्थे K. 4 C, G1, G2, J add here स्वारे ससर्चनवर्चा करोत्येते प्राणोक्ता इति ते. 5 °शीर्ध्वनिर्द्रप्सन् C; °शीर्धाध्वनि ई° G1, J; °शीर्ष्वांध्वनि ई° G2, शीर्वाध्वनि ई° K. 6 G1, G2, J add स्वा 7 तत्रैतन्मै° C, K; तत्रैतमै° G1, G2, J. 8 स्वयोन्युपन्नं C, स्वायान्यपन्नं G1, G2, J. 9 अनभिवनीष्वप्रवनीषु C; अनंभ( °भि J ) वनीष्वप्रवतीषु G1, G2, J, K 10 त्रिराड् Ck. 11 प्रागादनु° C, K; प्रागादनु° G1, G2. 12 तावदा° B. 13 प्रवृत्या C, प्रत्या G1, G2. 14 °स्याश्वान्यन्ने या याश्वाघन् C. 15 °मेवैषां C, K; °मेविषां G1, G2, J.

"दैर्घश्रवसं स्यात्तु यदि जायेदिति तु भवति, न चेदेषकल्मतुमुत दीर्घं ऋणुयादिति ।

अपि वा प्रायणार्थमेव स्यात् ।" Ārṣ. K. V. 62 a.

स्यैतं च [हिं] भवति प्रवद्योनि चेति ।

ककुबुत्तरासु ककुबुत्तरास्थानं हि, सर्वबृहतीष्वेके ।

एवं स्वर्गकामयज्ञे ।

अपि वा स्वर्गोक्तां बृहतीं स्वर्गकामयज्ञेऽचिकीर्षेत् ।

पुरस्ताज्ज्योतिर्बृहत्य इति वा ।

तत्त्वे विप्रतिपद्यन्ते ।

ज्योतिष्टोममित्येके ।

गायत्रीभ्यां जानीम इति ।

आर्षीस्तत्त्वमित्यपरम् ।

प्रवतीभिरयं क्रतः ।

ता एताः प्रवत्य इति ॥ २ ॥

नैवंनः पठन्त

अथातश्चातुर्मास्यानि ।

स एष षडहो विहृतः ।

तत्र षाडहिकान् स्तोमान् करोति षडहन्यायेन ।

तांस्तु यदेवं प्रयुङ्क्ते, एवं रोहो भवति ।

अथापि नानादीक्षावभृथानीमानि पर्वाणि भवन्ति ।

तत्र सर्वाण्यहान्युपक्रमः ।

स्तोमेन प्राचिकमिषीत् ।

अथाप्येवमेनाननवच्छिद्यानन्ततोऽप्यवस्यतीति ।

अंवयन्ति तन्त्राणि पृष्ठानि संस्था इति ।

अहां व्युत्क्रमादेकाहिकान्येकाहे, द्वैरात्रिकाणि द्विरात्रे ।

उद्धरति रात्रिमपरिकाण्डतया द्व्यहस्य ।

1 चेदश्रत्नतुंमुत B, चेदशकर्नुंमुत C, नवेदशकन्नतुंमुतं J. 2 दीर्घः B. 3 स्व० B. 4 Wanting in B 5 चेति C. 6 गेहोऽपि C. G1, G2, J, K. 7 ण्तों G1, G2, J, K. 8 इस्त्र G1, G2, J. 9 ण्ते दी० C. 10 ण्वन् B, ण्वं G1. 11 प्रवन्त्यानि० C, G1, G2, J, K 12 In B only. 13 G1, G2, J add ह. 14 ण्तत्र C. 15 प्रयुङ्क्ते B. 16 ण्श्वानृथानि B; ण्क्षे० G1, G2, J 17 सर्वाणि C. G1, G2, J 18 ण्ह०C. 19 ण्कमविषीत् B. 20 अवर्दान्ति C, भवन्ति G1, G2, J, K 21 त्रिकान्यैका० C, K त्रिकानैकानेकाहे G1, G2, J. 22 रात्र० B; G1, G2, J omit रात्रि० उद्धरति (p. 117. 2).

त्रैरात्रिकाणि त्रिरात्रे ।

उद्धरति वामदेव्यं चास्य प्रत्नं[1] चापरिकाण्डतया ऽयहस्य ।

नाना ब्रह्मसामानि, नानात्वार्थं[2] श्यैतनौधसवर्णानीति[3] ।

बार्हद्[4]रथन्तरपृष्ठ्यायौक्ष्णुत्वमेवादाशरात्रिकम् ।

तदेतर्दे[5]पूर्णदर्वानुग्रहाय ।

'श्रग्ध्यू३षु शचीपते' इति । SV. 1. 253; 2. 929; RV. 8. 61. 5.

प्रथमस्याह्नो ब्रह्मसामस्तोत्रीयो[6] वैश्वदेवस्याय[7] स्थानमापन्नः, एषा विश्ववती भवतीति ।

पञ्चप्रतिपत्कान्यहानि ऋत्वभीज्यायाम्,[8] पञ्चर्तुः[9] संवत्सर इति । cp. PB. 18. 9. 5; ŚB. 1. 2. 5. 12; 1. 5. 2. 16.

षण्णामह्नां प्रतिपदः, षडृतुः संवत्सर इति ।

"त्रिष्टुभं वैश्वकर्मणिकं[10] करोति ।

न हि गायत्री विद्यते[11] ।" Ārṣ. K. V. 65b.

समापद्यन्ते त्रिरात्रे भागाः, तदनु[12] द्रव्याणि ।

हाविष्मतं[13] द्वितीयेऽहनि त्रिरात्रस्य कुर्यादिति धानञ्जय्यः ।

ऋद्धिसामे[14] मा प्रच्योष्टेति ।

यौक्ताश्वमेवेति गौतमः ।

कृतं हाविष्मतं[13] द्विरात्रे ।

तृतीयस्थानं च हाविष्मतं त्रिरात्रे[15] ।

तत्रैतत्[16] संहितं शुनाशीर्यं सन्तानार्थे[17]

'स सुन्वेयो वसूनाम्' SV. 1. 582; 2. 446; RV. 9. 108. 13; PB. 13. 11. 2.

'प्राणा[18] शिशुर्महीनाम्' इति । SV. 1. 570; 2. 363; RV. 9. 101. 1; PB. 13. 5. 3.

पञ्चमषष्ठाभ्यामुष्णिक्ककुभौ षडहं समीप्सुः[20] प्रत्याहरति ।

एतेन न्यायेन त्रिरात्र[21]प्रभृतिष्वहर्गणे[22]ष्वेते भवतः ।

---

1 प्रत्नां C, G1, G2, J, K. 2 नानार्थं C, ०र्थे G1, G2, J. 3 ०नि C, K. 4 ०दर्या० C, G1, G2, J, K. 5 शग्ध्यूषु B. 6 ०त्रीया K. 7 एषां C, G1, G2, J, K. 8 ०प्रतिकान्यहाहाः वृत्वभी० G1, G2, ०प्रन्कान्यहाहाः वृत्वभी० J; ०प्रतिकान्यहान्यृत्वभी० K. 9 ०र्त्तवः B. 10 ०र्मणीं C, G1, G2, J, K. 11 ०न्ते B. 12 ०दानु० B, C, G1, G2, J, K repeat तदनु द्रव्यानि ··· अयास्चे ( p. 118 no. 13 ). 13 ०न्तं G1, G2, J. 14 ०सामाम० C, ०साममास्च्रो० G1. 15 J omits त्रे. 16 J omits त. 17 ०नः K. 18 ०नाच G1, G2, J. 19 प्राणाः C. 20 ०हमभीप्सुः प्र० K. 21 द्विरात्र० C, G1, G2, J, K. 22 ०हरगणेष्वेते J.

न चेत् [ छंतागमो भवति ।

द्विपदातिच्छन्दसो दशरात्रन्यायेन, ते जगत्याः पुरस्ताद्विदधाति ।

अन्तच्छन्दसी अन्त इति, तेऽयं न सर्वान्ते नाशयनच्छन्दोऽन्तेऽचिकीर्षीत् ।

तत्रैता बाजदावर्योऽन्तान्विताः—"अया रुचा" इति । SV. 1. 463; 2. 940; RV. 9. 111. 1; PB. 16. 16. 8.

नित्यवर्त्सा स्वयोनयः ।

एतेन न्यायेन त्रिरात्रप्रभृतिष्वहर्गणेष्वेते भवतः ।

न चेत् ] स्तोमसंरोधो भवति ॥ ३ ॥

अथैते सप्तदशाः ।

तत्र यार्हतेष्वाष्टमिकं पञ्चर्चं करोति, एतद्भक्तिनोह्न इति ।

तार्तीयकं रथन्तरपृष्ठेषु, एतद्रथन्तरभक्तिन इति ।

अनिरुक्तः प्रथमः ।

तत्र यो द्रव्यविकारो निर्वाकार्थेन स भवति ।

अथ खल्वाह—"मारुती भवति, पौषी भवति, वैश्वदेवी भवति" इति । cp. PB. 18. 1. 14, 15, 17.

केनो विद्यादेतद्देवत्या इमा भवन्तीति ।

एतद्देवत्येषु सूक्तेषु समाम्नाता इति ।

यानि गोस्सामानि तानि सामानि ।

अनुपृष्ठं संहितमेवैतदाग्निष्टोम्यात् क्रियते ।

स्वर्गकामयज्ञ उत्तरः ।

तत्र यो द्रव्यविकारः स्वर्गकामयज्ञत्वात् स भवति ।

अथ खल्वाह—"सोमपीथस्याऽविदोहाय" इति । PB. 18. 2. 12.

एतदपायवदिति ।

स्वर्गकामयज्ञ एवोत्तरः ।

तत्र गोस्सामानि यौदुदाक्षिण्यात् ।

---

1 B omits कृतागमो ··· न चेत् ( line 9 ). 2 कृतागमो G1, G2, J, K. 3 पदा॰ G1, G2. 4 ते यत्र G1; ते यत्र G2, J. 5 See p. 117 no. 12. 6 ॰त्स्य G1; ॰त्स्य G2, J. 7 ॰ते ज्याह G1, G2, J; ॰वे त्वाह॰ K. 8 स्वस्त॰ C, G1, G2, J, K. 9 अनिरुक्तः G1, G2, J. 10 केनो नो B; केना K. 11 Wanting in C; ॰षु G1, G2, J. 12 ॰न्यम् G1, G2, J, K. 13 C, G1, G2, J, K repeat गरुत्-द्रष्याणि ··· अया रुचे after ॰पीथ; C puts S after रुचे ( see p. 117 no. 12 ). 14 ॰रोहानेतनन्दत्रभावा दे स्तेतदबोचदिति स्वर्ग॰ C, G1, G2, J, K. 15 ॰काम एव दश G1, G2. 16 तत्रोभे सामनी C, G1, G2, J, K. 17 बहुरश्मि॰ C; बाहुरश्मि॰ G1, J.

अपि वा स्वर्गकामयज्ञत्वादेव ।

एवमिव ब्राह्मणं भवति—"अनड्वाहौ वा एतौ देवयानौ यजमानस्य यद् बृहद्रथन्तरे" इति । PB. 12. 4. 14.

वैश्ययज्ञ उत्तरः ।

तस्य कण्वरथन्तरम् ।

"अभि त्वा पूर्वपीतये" इति, SV. 1. 256; 2. 923; RV. 1. 19. 9; 8. 3. 7.

एतासु कुर्यादिति लामकायनः ।

यथा वा[1]प्यर्यायाः[2] शूद्रस्तं[3]लपमुद्दिशे[4]त्, अतो देशीयमेतद् ।

य एतद्रथन्तरस्यर्क्षु कुर्यात् एतासु त्वेव स्यात् ।

तासाᳪं हि स्थानमापद्यते ।

अपि[5] चैताः परोक्ष[6]पृष्ठे षडह इति ।

"सर्वबृहतीषु नान्यद्[7] बृहद्रथन्तराभ्यामर्हति ।

यत्[8] ककु[9]बुत्तरासु स्यात्" ते खलु विश्ववतीभिः कल्पयति । Ārṣ. K. V. 68a.

एतद्भक्तिर्वैश्य इति ।

तन्त्रे विप्रतिपद्यन्ते ।

ज्यो[10]तिष्टोम[11]मित्येके ।

गायत्रीभ्यां जा[12]नीम इति ।

आशीस्तन्त्रमित्यपरम् ।

विश्ववतीभिरयं क्लृप्तः ।

ता एता विश्ववत्य इति ।

तत्र यो द्रव्यविकारो वैश्वदेवीचिकीर्षया स भवति ।

यान्यायुषः सामानि तानि सामानि, अनुतन्त्रं या[13]न्यन्यानि पृष्ठा[14]नि, ब्रह्मसामभ्यां विशोविशीयम्, उत्तरस्या[15]मग्निष्टोमसाम ककुबुत्तरासु ककुबुत्तरास्थानᳪं हि ।

स्वर्गकामयज्ञ उत्तरः ।

तत्र खलु गोस्तन्त्रं करोति ।

---

1 Wanting in K. 2 अप्यन्यायाः B. 3 ॰त॰ G1. 4 ॰मुद्देशे॰ B; ॰मुद्दिशे॰ G1, G2, J, K. 5 Wanting in C, G1, G2, J, K. 6 ॰क्षे पृष्ठे C, ॰क्षपृष्ठये K. 7 ॰नान्यत्र K. 8 Wanting in C, K. 9 पक्षसुत्त॰ C; कुकुत्त॰ G1, G2, J. 10 ज्योति॰ C, G1, G2, J, K. 11 ॰ष्टोमतन्त्रमि॰ G1, G2, J, K. 12 जगतीम G1, G2. 13 यान्यानि G1, G2. 14 पृष्ठ B, K. 15 ॰स्याग्नि॰ B.

एतदन्तं तन्त्रतरम् ।
अन्तविधोऽयं भवति ।
"अनिरुक्तं प्रातस्सवनम् ।" PB. 18. 6. 7.
तत्र यो द्रव्यविकारो निर्वाकार्थेन स ह्वं भवति ।
अथैतद्देवस्थानं स्थितनिधनम्, उतास्मिन् धीस्तिष्ठेदिति ।
तस्य रथन्तरं पृष्ठं वाजपेयसामभिर्बृहत् करिष्यन् भवति ।
अन्तोक्तोऽर्कः, वाजोक्रमघम् ।
'त्वं नश्चित्र ऊत्या' इति SV. 1. 41; 2. 973; RV. 6. 48. 9.
वारवन्तीयमग्निष्टोमसाम ।
एता राधंस्वत्यः स्वर्गकामयज्ञेऽभिरूपाः ककुबुत्तरासु ककुबुत्तरास्थानं हिं, सर्वबृहतीष्वेके ।
तद् व्याख्यातं सर्वस्वारे ।
अनुतन्त्रमुक्थंप्रणयः ॥ ४ ॥
"अथैषोऽभिषेचनीयः ।" PB. 18. 8. 2.
"तस्य द्वात्रिंशाः पवमानाः ।" PB. 18. 8. 3.
अनुपूर्वमावृत्तिस्थानेषु पञ्चदशप्रभृतीन् वीहतस्तोमानिति ।
ते प्रत्तस्थाना इति ।
तत्रोमे सामनी वाहुदाक्षिण्यात् ।
अथाप्युमे वीर्प्सायाः अभिरूपे ।
उक्थसंस्थं करोति ।
द्वितीयेयमिज्या ।
तत्र द्वितीयां संस्थामिति व्याख्यातम् ।
वहिष्पवमानमन्यत् कथिमतः ।
ते खलु शश्वद् भाल्लविन आग्नेयीं पावमानीमुद्धरन्ति ।
यथा त्रिवृतं न वयमुद्धरामः, पृष्ठेभ्य इयं प्रति, एवं पृष्ठानामविलोपं इति ।
अथापि स्तोमः प्रधानतरश्छन्दस इति ।
आनुष्टुभं पर्यायं करोति, आनुष्टुभोऽभिरंजेति ।

1 ०न्तनन्त्र० C, G1, G2 J, K. 2 Wanting in C, G1, G2, J, K 3 ०मरि० G1, G2, J, K. 4 अद्वोक्तो० C. 5 राद्स्वत्य B. 6 ककुप्परः इ B. 7 ०दभि B. ०स्थारं हि० G1. 8 ०स्वारो C; ०सुरे G1, G2, J, K. 9 ०नत० B. 10 ०थः प्रणवः B; ०थप्रणयाय Ca. 11 भागस्तोमाने C, G1, G2, J, K. 12 प्राप्ता स्था० C, G1, G2, J, K. 13 आडुदाक्षि० C; वाहुदक्षिणपक्षपातश्चा० G1; वाहुदक्षिणपक्षा० G2. 14 ईप्सायामभि० C, G1, G2, J, K. 15 तव C. 16 ०ओवप G1, G2, J. 17 सोमप्र० K. 18 पर्यासं C, G1, G2, J, K. 19 करोतीति B. 20 ०भो हिराजेति C, ०भो हिराजे G1, G2, J, K.

"तासां मध्यमामुत्तमां कुर्मः[1]", सूर्यवत्यन्तेऽभिरूपेति । Ārs. K. V. 71a.

सम्भार्यान्वितान्याज्यानि ।

अथ खल्वत्र राजसामानि करोति, राजसूयो राजसामानीति ।

एकादश करोति त्रिष्टुप्सम्पन्नानि, त्रैष्टुभोऽभि[2]राजेति ।

सर्वच्छन्दस्यानि करोति ।

स्वस्यै[3] कृत्स्नं[4]विकाराय न पाङ्क्तं करोति, न हि पाङ्क्तं राजसाम विद्यते ।

एकमुदाहरन्ति सत्यश्रवसो वाय्यस्य—

'महे नो अद्य बोधय[5]' इति । SV. 1. 421; 2. 1090; RV. 5. 79. 1.

[6]राजसूययाजी स बभूव ।

नेह[7]राजसूययाजिनां सामानि क्रियन्ते ।

बार्हतानि भूयिष्ठानि करोति ।

सवनच्छन्दो बृहती ।

अथाप्येतन्[8]मध्यन्दिनच्छन्दो भवति ।

बार्हतानि च[9] भूयिष्ठानि लभन्ते[10] इति ।

द्वे गायत्रीसाम[11]नी करोति ।

द्वे हि[12] पवमानमुखयोर्गायत्र्यौ भवतः ।

ते कुशलं यदनुपूर्वं[13] पञ्च माध्यन्दिने[14] पडाभवे, एवं रोहो[15] भवति ।

देवस्थानं वरुणसाम सोमसामेति देवराज्ञा[16]म् ।

सैन्धुक्षितं दैर्घश्रवसं पार्थं काक्षीवतं ब्राह्मणसाम सै[17]न्द्राजसामसूपसङ्ख्यायते ।

क्षत्रमार्गे[18]ण चचार राजसूययाजी बभूवेति ।

दैवोदासं बाभ्रवभ्वं वैतहव्यं त्रासदस्यवमिति मनुष्यराज्ञाम् ।

द्वैपद उक्थप्रणयः ।

विभ्रं श्याशङ्कमिदं कर्म ।

द्विविधेन प्रतिष्ठेति[19] ।

---

1 कुर्युः C. 2 ०भो हि रा० C, G1, G2, J, K. 3 सर्वस्य C, G1, G2, J. K. 4 कृत्स्नीका० C, G1, G2, J, K. 5 बोधयन्ति । J. 6 राज० C, G1, G2, J, K. 7 नेह रा० C. 8 ०न्मा० C. 9 वाव C, G1, G2, J, K. 10 ०त C, G1, G2, J, K. 11 ०सामानी G1. 12 बहिष्पवमानं मु० C, G1, G2, J, K. 13 ०पूर्व्यं B. 14 ०नेव G1, G2, J; ०ने च K. 15 करोति हा for रोहो in B. 16 ०राज B. 17 सदद्राजसा॰सू० B; साद्रसामसूयसं० G1, G2, साद्राजसामसूयसं० J. 18 ०क्षमुत्स्यं चयेन प्र० B. 19 ०ष्ठति G1, G2.

तत्रैतत् सत्रासाहीयं सोदसंहीयं नाम राजयज्ञेऽभिरूपम् ।
अनुपृष्ठमितरे ।
सदोविशीयं दशपेयस्य मध्यन्दिने विशीयं राजयज्ञेऽभिरूपम् ।
वारवन्तीयम् अग्निष्टोमसाम स्यास्त्वेवं सुवारवन्तीयमिति ॥ ५ ॥

"प्रतीचीनस्तोम उत्तरः ।" Ārs. K. V. 72 a.
तं खलु बृहत्पृष्ठं करोति ।
एतद्भक्तिः क्षत्रिय इति ।
अतिरात्रसंस्थं करोति ।
चतुर्थीयमिज्या, तत्र चतुर्थीं संस्थामिति ।
अथापीदं द्वितीयं यज्ञस्थानं, यदहीनो द्वितीयो वर्णः क्षत्रिय इति ।
ज्योतिष्टोमं तन्त्रमेतत् ।
इह भक्तितन्त्रयोरयमु लोकः क्षत्रियस्येति ।
स्तोमकारित आयापः ।
व्युष्टिद्विरात्र उत्तरः ।
तत्रामुमेव द्विरात्रमाहरति ।
तत्र दशस्तोत्रीया उपाहरति ।
संवत्सरसम्पदे चतुर्विंशावुत्तरौ पवमानौ करोति ।
बहिष्पवमानसमाधये संपद्दशत्रिणवौ प्राव्यावर्तयति ।
तावनन्तरयोः स्तोत्रीययोरनुगृह्णाति ।
एकविंशान्युक्थानि करोति ।
विभ्रंशाशङ्को द्विरात्रः ।
तत्रामुमेव प्रतिष्ठास्तोममभिप्रायुङ्क्ते ।
अथैतद् विंशोविशीयं राजयज्ञेऽभिरूपम् ।
क्षत्रस्य धृतिः किमर्थमिति ।
आलुब्धजनपदोऽयं राजा, तस्य क्षत्रसंयमार्थः क्षत्रसंयमार्थः ॥ ६ ॥

दशमः पटलः

अथैतान् द्वन्द्वा इत्याचक्षते ।
तेन सर्वे द्वन्द्वा द्वन्द्वे[17] मिथ्यन्तो भवन्ति ।

1 सोदसनाम रा० C, सोदसम्ने रा० G1, G2, J. 2 दशपेय० B, K. 3 वारवन्तीयम् C. 4 सु is wanting in C. 5 B omits स्तोम. 6 J omits द्वितीयं ... यदहीनो. 7 ज्यो० K. 8 स सत्र० B. 9 ०यतो B. 10 क्षत्र० B, G1, G2, J. 11 स्तोमवीर० C, J, G1, G2, K. 12 क्षत्रियस्य C. 13 धृतिः B. 14 ०र्थ इति G1, G2, J, K. 15 In B only 16 नयानो C. 17 द्वन्द्वान् G1, G2. 18 मिथ्याद्ध C. मिथ्याद्ध G1, G2, J, K

यौ यावेषाꣳ समानमर्थमुपकृतौ तौ [तौ[1]] द्वन्द्वौ भवतः ।

राज्यकामयज्ञः प्रथमः ।

तस्य यदेवंविधं[2]स्तोमयोग एवमष्टावेकविꣳशान् सम्पद्यत इति ।

सप्तदशं पवमानेषु निदधाति ।

एष विद्स्तोमो भवति ।

विद्कामो राजा ।

अथाप्येते ग्रामा इव सुत्याया यत् पवमानाः सम्पूर्णा[3]श्छन्दोभिः सामभिरिति ।

तत्र विद्स्तोमꣳ सप्तदशमचिकीर्षीत् ।

अनुपूर्वमा[4]वृत्तिस्थानेष्वितिशिष्टान् भागस्तोमान् ।

एवं चतुष्टोमो भवति ।

विभ्रꣳशाशङ्कमिदं कर्म ।

स चतुरेण प्रतिष्ठेति ।

व्याख्यातमौभयसाम्यमभिषेचनीये ।

ज्यौतिष्टोमं तन्त्रम्, तद् व्याख्यातं केशवपनीये ।

अन्नाद्यकामयज्ञ उत्तरः ।

तत्र चतुर्ऋचमाहरति ।

एतदन्नाद्यसꣳस्तावमिति ।

आ[6]महीयवादुत्तरमाभीकम् ।

एतद्वृष्टिसꣳस्तावं वृष्टिर्जं[7]मन्नमान्धीगवादर्कपुष्पम् ।

एतदन्नाद्यसꣳस्तावमिति ।

प्रजाति[8]कामयज्ञ उत्तरः ।

तत्रै[9]कर्चमुपाहरति ।

एषा वृषण्वती प्रजातिकामयज्ञेऽभिरूपा, अन्तरिक्षप्रवादान्तरिक्षायतनां गन्धर्वाप्सरस इति ।

तत्र यो द्रव्यविकारः प्रजातिकाम[10]यज्ञ[11]त्वात् स भवति ।

शुं[12]शुत्सयज्ञ उत्तरः ।

"तस्य द्वादशं माध्यन्दिनꣳ सवनं त्रिवृती अभितः ।" cp. Say. PB. 19. 4. 2

एवमिव ब्राह्मणं भवति—"यैकादशी", "या द्वादशी" इति । cp. PB. 19. 4. 3. 4.

---

1 Wanting in B, G1, G2, J, K. 2 ०विधःस्तो० C, K, ०विधःस्तौ० G1, G2, J. 3 पूर्णा छ० G1, G2, J, K. 4 ०आवर्त्ति० C, G1, G2, J, K. 5 चतुराच० B. 6 अथामही० B. 7 ०जमेवमन्न० C; ०अजन्न० G1, G2; ०जमन्ना० J. 8 प्रजापति० Cख, G1, G2, J, K. 9 ०नाय B. 10 काम is wanting in J. 11 ०यज्ञा G1; ०यज्ञात् G2. 12 शुश्रुत्स० C, K.

एकादशीः प्रातःसवन उपसञ्जनीत द्वादशीस्तृतीयसवने ।
एवं गरस्य व्यपादानꣳ सिध्यतीति ।
तदपि शश्वदृष्यर्येव उदाहरन्ति ।
स्तोमो वै त्रिवृतः, स्तोमो द्वादशः ।
यत् त्रिवृतो द्वादशमुपयन्ति पुनर्द्वादशात्त्रिवृतं तस्मादेतेन स्तोम इत्युक्थसꣳस्थं करोति ।
एवमेतासाꣳ स्तोत्रीयाणां व्युपादानꣳ सिध्यतीति ।
स्तोमकल्पायैकꣳ साम मध्यन्दिने उपाहरति ।
स यन्मैधातिथम् ।
एतस्यारिष्टवती योनिः प्रायश्चित्तकृत्येऽभिरूपेति ।
अत्रस्तो(?) यो द्रव्यविकारः शुशुंत्सयप्रत्वात् स भवति ॥ ७ ॥
पशुकामयज्ञ उत्तरः ।
तत्र चतुष्पर्यायान् स्तोमान् करोति ।
"चतुष्पादाः पशवः" इति । PB. 19. 5. 3.
तदपि शश्वद् ब्राह्मणं भवति—यच्चतुश्चतुर्हिङ्करोति ।
अथ सर्वेवानुष्टुभः प्रतिपदः करोति ।
पशुकामयज्ञे चतुष्पदा अभिरूपा इति ।
तास्तिस्रः सतीश्चतस्रो गायत्रीः करोति ।
गायत्रीस्थानꣳ हि भवति पारयन्तीयं यज्ञायज्ञीयं चतुर्थेपृष्ठस्तोत्रीयेषु ।
एवमिव ब्राह्मणं भवति—"नोक्थो नाग्निष्टोमः" इति । PB. 19. 5. 11.
यद् पारयन्तीयं पशुसꣳस्तावं च ।
अपि च स्तोत्रीयाणाꣳ सन्निवारणाय ।
"पशुकामयज्ञ एवोत्तरः ।" Say. PB. 19. 6. 1.
तत्र चतुर्ऋचमाहरति ।
एतत् पथ्यं छन्द इति ।
षोडशिसꣳस्थं करोति ।
एवमिव ब्राह्मणं भवति—"नोक्थ्यो नातिरात्रः" इति । PB. 19. 6. 3.
पशुकामयज्ञत्वाद् गायत्र उक्थप्रणयः ।

---

1 उपाह० C. 2 त्रि is wanting in G1, G2, J. 3 ०शांसि० B. 4 तस्मादेव C, G1, G2, K; तस्मादेवा J. 5 पुनस्तोम C, G2, J, K; पुनस्तो G1. 6 ०व्यपादान० B; ०भुपादान० G1, G2, J; ०नानुपादान० K. 7 ०न उप० B. 8 ०वेध्स्तेतो यो द० C; ०वेस्तेतो यो द० G1, G2, J, K. 9 पुष० C. 10 ०त्वात् C 11 ०पदाः G1, G2, J. 12 अत्रा B; अ G1, G2. 13 ०नानुपादु० G1, G2, J, K. 14 सवती० B. 15 ०यं य० K.

पशुकामयज्ञावेवोत्तरौ ।
अपि वा द्विरात्रासिमुपकृतौ स्याताम् ।
उभयेज्याँ[1]नियोगात् सप्तिसप्तदशँ[2]स्तोमौ करोति ।
एतौ पशुसंस्तावाविति ।
एकविंशमुत्तरस्य बहिष्पवमानं करोति ।
त्रिकं होतुराज्यम् ।
समायावेकाहौ व्याँ[3]विवर्तयिषन्नेतस्मिन् तदेकविंशे पराक्रम्य त्रिकेण वज्रेण बलं विमेदे[4]र्ति लामकायनः ।
ता उ सप्तिसप्तदशावेव सम्पदेति ।
नानातन्त्रे नानापृष्ठे द्विरात्रन्यायेन सञ्चारयति चें[5] न च सञ्चारयँ[6]ति ।
एकाहन्यायेनाहःसञ्चारणम् ।
द्विरात्रन्यायेनासञ्चारणम् ।
जनुपैकवौ द्विरात्रन्यायेन निपेधान्धीगँ[7]वे द्विरात्रन्यायेनाञ्जत इति ।
कावमन्त्यम् ।
एषा सामाँ[8]न्या तृचप्रथमा पशुप्रवादेति ।
सत्त्रासाहीयँ[9]श्रुध्ये द्विरात्रन्यायेन, श्यावाश्वकौञ्चे द्विरात्रन्यायेन ।
'अग्रेगो राजाप्यस्तविष्यते' इति । SV. 2. 966; RV. 9. 86. 45.
कौँ[10]वमन्त्यम् ।
'अग्रेगो' इति ।
अहेयं[11] भवतीति शाण्डिल्यायनः ।
गोप्रैँ[12]वादात्तु स्नातकाः कुर्वन्तीति ॥ ८ ॥

अपचितिकामयज्ञ उत्तरः ।
तत्र चतुर्विंशपैँ[13]ष्ठान् करोति ।
एवमिव ब्राह्मणं भवति—"वि ह्यौँ[14]तियन्तीति ।" PB. 19. 8. 6.
चतुर्विंशत्रिणवाविति[15] वैतद् भवति ।
चतुर्विंशं पवमानयोर्निदधाति ।
तेन प्रच्युतौ त्रिवृत्सप्तदशावाज्यपृष्ठेष्वनुगृह्णाति ।

---

1 °ज्यानि ज्योगात् तत्र स° C; °निज्योगात्तत्र स° G1, G2, J, K. 2 °शौ स्तो° C, G1, G2, J, K. 3 °व्यावर्त्त° B. 4 °मेदिति B. 5 व च न सञ्चा° G1, G2, J, K omit च. 6 °येति G1, G2, J, K. 7 औदलान्धी° C, G1, G2, J, K. 8 °म° B, Ck. 9 °यर्सु° C, G1, G2, J. 10 दावम° Cख, वदावम° G1, G2, J, K. 11 °हेयं B. 12 G1, G2 add राजाप स्तविष्यत इति after गो. 13 षष्ठान्... चतुर्विंशं (line 26) is wanting in G1. 14 ह्यन्ती° C, G2, J. 15 °विती‍वे C, J, K.

ज्योतिष्टोमं [ तन्त्रम्, एतदपचिततरं तन्त्रयोरिति।
स्तोमकारित आवापः।
अपचितिकामयज्ञ एवोत्तरः।
तस्योक्ताः स्तोमाः।
तस्य यदेवंविधः स्तोमयोगः, एवं "विराज२ सम्पद्यत" इति। PB. 19. 9. 2.
द्विपदाः करोति।
दशरात्रन्यायेन स यदेताः, एता दशरात्रावसाने दृष्टा इति।
तत्र वारवन्तीयमन्तसाम, अन्तच्छन्दसि।
सूर्यवत्यो दशरात्रन्यायेन।
अग्न्यभियजन उत्तरः।
तत्रोभे सामनी करोति।
अग्न्यभीज्यां कृत्स्नीचिकीर्षन्।
तथाप्युभयसामाग्निर्भवति।
उभाभ्या९ हि परिगीयत इति।
ज्योतिष्टोमं ] तन्त्रम्, एतदाग्नेयमिति।
स्यात९ सौपर्णं पक्षिसाम पेंद्यभीज्यायाम्, अग्नेर्व्रतम् अग्न्यभीज्यायाम्, स्याच्छिरामर्कोऽग्न्यभियजने व्रते दृष्टो भवति।
अग्न्यभियजन एवोत्तरः।
तत्र ज्योतिष्टोममेवाहरति, एतदाग्नेयमिति।
त्रिवृत्पञ्चदशावाज्यपृष्ठेषु सम्पन्नयेन कुर्मः।
व्याख्यातमौभयसाम्यम्।
ज्योतिर्ह्येवायं विकृतः।
तत्रौदलमनुष्टुभि यज्ञसमाप्तये।
तदेतदष्टमात् पृष्ठान्वितम् ॥ ९ ॥
राजयज्ञ उत्तरः।
तत्र द्वे स्तोत्रीये पाहरति ककुद्रूपं दिदर्शयिषन्।
अपि वा सदोविशायसामान्ते गृह्यमाणे सप्तदश कारयेताम्।

---

1 B omits तन्त्र ··· ज्योतिष्टोमं (lines 1-16). 2 ०समाने C. 3 ०रक्तं B. ०रर्ज J. 4 पद्यभीज्यायाम् Ca; पक्षाभी( भि J )० G1, G2, J, K. 5 ०भीज्यायाम् Ca; ०भ्यायाम् G1, G2. 6 Wanting in B. 7 ०भियजन B; अग्नियजनान्ध्याभीज्यायाम् G1, G2, J; अग्नियजन K. 8 ०ते J. 9 ०साम C, G1, G2, J, K. 10 स्तो० B. 11 तदष्टमात् G1, G2; तदष्टमात् J. 12 ०सामन्ते B, K; ०सामांत G1, G2, J.

विषमे स्तोमे सत्यनध्यासां बृहतीं करोति ।
ज्योतिष्टोमात्[2] तस्याः सौमकल्पो व्याख्यातः ।
अग्निष्टुति व्याख्यातमौभर्यसाम्यम्[4] ।
ज्योतिर्ह्येवायं[5] विकृतः[6] ।
तत्र गौरीवितमनुष्टुभि, एतद्रूपभोक्तमिति ।
वैश्ययज्ञ उत्तरः ।
वैश्यस्य राजमात्रस्य स्वाराज्यमिच्छतो[7] यज्ञः स्यादित्याहुः ।
राज्ञ एव खल्वय[8] संविरीतस्य साहसिक्याद् ।
विड्भूतस्य कितवाशयस्य सवः स्यादिति शाण्डिल्यः ।
अभिषेचनीयं प्रत्युपधावति ।
सवसामान्याद् द्वात्रिंशापायादनुष्टुभः[9] प्रतिपदोपयन्ति ।
कुशलं[10] यदुपवीतीमेषा[11] राथन्तरी, राथन्तरो वैश्य इति ।
व्यत्यासेन नित्यां बृहतीं करोति ।
समो हि स्तोमः ।
व्याख्यातावुत्तरौ ।
राजयज्ञ उत्तरः ।
तं खलु बृहत्पृष्ठमिन्द्रन्यङ्गाभिः कल्पयति ।
एतद्भक्तिः क्षत्रिय इति ।
तत्र या इन्द्रवत्यो विस्पष्टास्ताः ।
अथापि वृत्रहप्रवादेन वृषण्वत्[12] प्रवादेन[13] सूर्यवत्तयेत्यैन्द्र[14] रूपमनुगृह्णन्मन्यत इति ।
तन्त्रे विप्रतिपद्यन्ते ।
ज्योतिष्टोमम्[15]मित्येके ।
गायत्रीभ्यां जानीम इति ।
आशीस्तन्त्रमित्यपरम् ।
इन्द्रवतीभिरयं क्लृप्तः, ता एता इन्द्रवत्य इति ।
तत्र यो द्रव्यविकार ऐन्द्री[16]चिकीर्षया सं[17] भवति ।
राजपुरोहितयोर्यज्ञ उत्तरः ।

---

1 ज्यो॰ K. 2 ॰म्यात् C, G1, G2, J, K. 3 साकमश्वो Cस, G1, G2, J. 4 ॰र्यं सा॰ K. 5 ॰तिर्विर्ह्ये॰ G1, G2, J, K. 6 प्रवि॰ G1, G2, J, K. 7 ॰मीप्सतो C, G1, G2, J, K. 8 सविपरीतस्य B; 9 ॰शादपायाद॰ C; ॰शपायाद॰ G1, G2, J; ॰शापयोद॰ K. 10 कुलं B. 11 ॰वीती॰ G1, G2, J, K. 12 वृषावत् B; wanting in G1, G2. 13 Wanting in G1, G2. 14 सूर्यवर्चीयन्त्यैन्द्र॰ B. 15 ॰मं तन्त्रमि॰ C; ॰मतन्त्रे । G1, G2; ॰मतन्त्रमि॰ J, K. 16 ॰न्द्रे चि॰ B. 17 संभ॰ G1, G2, J, K.

तत्रोमे सामनी, उभयानि व्यञ्जनानि, द्वैयह्ना[1] ज्योतिष्टोमं तन्त्रं नित्यं ब्राह्मणस्योक्तो[2] यज्ञं क्षत्रियस्य ॥ १० ॥

विजिघार्सयज्ञ उत्तरः।
तत्रोमे सामनी करोति।
विजिघार्सयज्ञं[3] कृत्स्नं[4] चिकीर्षन्।
तत्रैतद् विशोविशीयं विजिघार्सयज्ञेऽभिरूपम्।
सोमसामाथर्वणं वैतभिचरतः।
सोमसामैतत् क्रूरनिधनम्।
तस्य निधने विचारयन्ति—
"इन्द्र इव दस्यूं रमृणा २३१११ सूर्य इव दस्यूं रमृणा २३१११ वज्रिन् सुवज्री २३१११ न्।" LŚ 7. 10. 12; cp. Upg. 3. 8.
"अपि[6] वैतेषां द्वे पूर्वे चोत्तरे वा सर्वाणि वा समस्यन्नन्त्यमेव स्वरयेद्, यथा वायोर्भञ्जाया[7] निहन्यमानायाः ह्रादः स्यात्, यथा वायसी[8] सम्बृच्छेयाताम्, यथा [ वा ] निष्कः कृन्तत्रेणाभिहतो ध्वनेत्, यथा वा सनूपुरस्य[11] पादस्य[12] नियातस्य।" cp. Upg. 3. 8.
क्षुण्णिति चाथर्वणम्।
पशुकामस्यैतच्चतुर्निधनं पशुकामयज्ञेऽभिरूपम्।
एवमेर्थ एवोत्तरः।
अपि वैनाज्ञातमायश्चित्तये, यत्रानोज्ञातं भयमागच्छेत्, यथा मौटवमाजगाम।
यथा विहंतु शिरो, यथा वेयःपतनम्।
तदप्येवमिव ब्राह्मणं भवति—"इन्द्रमदेव्यो माया असचन्त" इति शाण्डिल्यायनः। PB. 19. 19. 1.
एवं नूनं तद्विदाञ्चकारेति ह स्माह धानञ्जय्यः।
यदर्थ इममाजहारानाज्ञात इव खल्वयं योगो भवति।
तत्र त एव स्तोमा ये पूर्वस्य।
तांस्तु यदेवं प्रयुङ्क्ते समायावेकाहौ व्यावर्तयिषन्।

1 मे C, G1, G2, J; द्वैयह्नात् is suggested here. 2 ०स्त्रु० B. 3 ०का B. K. 4 ०यज्ञं G1, G2, J, K. 5 कृत्स्नी B. 6 B omits वै. 7 ०यादर G1, G2, J, K. 8 वायेभ० G1, G2, J, K. 9 ०माना G1, G2. 10 ०दशो C. 11 Wanting in B; व K. 12 तंतत्रैयाभि० G1, G2. 13 ०श्नु० C, G1, G2, J; संत्पु० K. 14 नूह्वात् स्यात् B. 15 ०नेव G1, G2. 16 G1, G2, J omit वा. 17 यकाता० K. 18 भागवमा० B. 19 यथापि हतु B. 20 वयःप० C, G1, G2, J, K. 21 मसुवन्त K. 22 रोति G1, G2, J; ०कति K. 23 ददम० B. 24 मार्गस्तु B; त०स्तु G1. 25 ०देन प्रा० C. 26 ०व्यावर्त० B.

तन्त्रे विप्रतिपद्यन्ते ।
उभयसामतन्त्रमित्येके ।
प्लवत्यो होता माध्यन्दिनीया इति ।
आशीस्तन्त्रमित्यपरम् ।
अनाज्ञातप्रायश्चित्तयेऽयम् ।
तं[1]त्रानाज्ञातयोगा[2]ंश्चिकीर्षन् गायत्र्योः स्थाने[3] द्वे बृहत्यौ निदधाति ।
ते संव्यू[4]ह्य तिस्रो गायत्रीः करोति ।
गायत्रीस्थानः हि भवति ।
तत्र यो द्रव्यविकारोऽनाज्ञातप्रायश्चित्तये स भवति ।
अपि च विजिघांसया ॥ ११ ॥
अभिचरणीयावेवोत्तरौ ।
तयोः श्येनेनै[5]वं द्रव्यसमुद्देश उक्तः ।
ये पूर्वयोः पूर्वस्य स्तोमास्ते[6] तयोः पूर्वस्योद्धरति ।
सप्तदशनवदशौ प्रजाँ[7]तिसंस्तावाविति ।
षडतिशिर्ष्णी[8] द्विस्तोत्रभाजः करोति, सन्दंशरूपं दिदर्शयिषन् ।
येडं ककुभि करोति, पुरुषच्छन्दसः स्वरं विच्यावयिषन् ।
तत्रैतत् काशीतं क्षीणस्वरे[9]डं, त्वयं परेषामिच्छं[10]तीति ।
सामानुष्टुभि करोति , एतानि क्रूराणि सामानीति ।
स यत् त्रयाणां प्रथमं[11]मायतनामिति, पूर्वाध्यायं पूर्वे यज्ञस्थाने ।
अथाप्येतत् क्रूराणिधनं वधार्थेऽभिरूपम् ।
अथापि बृहन्निधनेनानुगृह्णाति, एषं[12] वै सामवज्र इति ।
बृहद्रथन्तरयोर्वदति ।
स्तोभकल्पा[13]योत्तरे विहिते[14]वन्तौ तृचावाहरति ।
तत्र देवे[15]साम स्यादिति धानञ्जय्यः ।
समाना[16]र्थौ हि भवतः ।
द्वितीयमिति गौतमः ।
सप्रायावेकाहौ व्या[17]वर्त्तयिषन् ।

---

1 तन्त्रो० B; तात्राता G1; तंत्राना० K. 2 श्चा G1, G2, J, K. 3 Wanting in G1, G2, J 4 संव्युह्य C, G1, G2, J, K. 5 श्येनैव C, G1, G2, J, K 6 ०मात्वे B. 7 प्रजापति० G1, G2. 8 ०ष्टाद् C, ०ष्टान G1, G2. 9 ०स्वतरैडं B. 10 ०न्तीति B. 11 प्रथमेतदानुष्टुभ( ०भि K )मिति C, G1, G2, J, K. 12 एषु B. 13 ०ल्प K. 14 ०इ० B. 15 तदेव सा० C 16 ०र्थौ K. 17 ०वर्तयिषन्न B; व्यावि-वर्त्तयिष्यप G1, G2, J, K.

अथाप्येतद्[1]भिनिकृष्टगीति[2] वधार्थेऽभिरूपम् ।
वज्रोकं[3] भम [4]हिष्टीर्यमुक्तो यज्ञमौपगवम् ।
ऐडत्वात् षोडशिसाम्नो[5] न[6] नार्मेधं करोति ।
तत्रैतदुद्व[7]शीयम् । एतेनेडाकामश्च सिध्यति, अजामिकल्पश्चेति ॥ १२ ॥
महानाम्नीः षोडशिसाम ।
एता वज्रोक्ता राजयज्ञेऽभिरूपाः, वज्रो[8] हि राजेति ।
कथं धर्मा इति ।
कर्त्तव्या इत्येके ।
अपि ह्यासामेव स्वाध्याये धर्मो भव[9]तीति । cp. Upg. 3. 5.
अथापि धर्मि[10]स्थानमापन्नाः ।
षोडशिधर्मान् कुर्वन् कथं महानाम्नीनां धर्मान् न कुर्यादिति ।
अथापि वज्रोक्ता आप [11]इति ।
अथापि सं[12]शयेऽलोपो लोपान्[13] ज्यायस्तर इति । cp. Upg. 3. 5.
अकर्त्तव्या इत्यपरम् ।
पृष्ठापन्नानां वदति यद्[14]ेव उपनिधाय स्तुवत इति ।
य[15]द्धेतदपि ह्यासामेव[16] स्वाध्याये धर्मो भवतीति, अन्यां[17]नप्येवंवादः स्वाध्यायधर्मान् प्र[18]तीयाद् । cp. Upg. 3. 5.
यद्धेतद् धर्मिस्थानमापन्ना इति, धर्मिस्थानमापन्नतरं खलु सद्द[19]न्तरं न धर्मा[20]ल्लभते ।
य[21]द्धेतद् वज्रोक्ता आप[22] इति, शान्त्युक्ता आपः, "अपः[23] पश्चात् पत्न्य उपसृजन्ति, वैश्वानरमेव तच्छमयन्ति, आपो हि शान्तिः" इति ह्याह । PB. 8. 7. 8.
यद्धेतत् सं[24]शयेऽलोपो लोपान्[25] ज्यायस्तर इति, यो रे[26]थन्तरधर्मानकृत्वा महानाम्नीनां धर्मान् कर्तव्यान् म[27]न्येत सदर्श[28]व्याघातः ।
अथापि तस्य वज्रोक्ततरा धर्मा इति धर्मा इति ॥ १३ ॥

---

1 ०द्भिनआत्तिष्टगीति B. 2 ०गीभि G1, G2, J, K. 3 यज्ञोकं B. 4 ०ष्टीयं मु० G1, G2, J, K. 5 ०म्ना G1, G2, J. 6 C omits न. 7 ०श० G1, G2. 8 ०ज्री G1, G2, J, K. 9 भवति G1, G2, J, K. 10 धर्मि is wanting in B. 11 Wanting in C, G1, G2, J, K. 12 ०योलो० C, J; ऽलोपो is wanting in J. 13 ०पा G1, G2, J, K. 14 ०व्य० C. 15 ०दा G1, G2 but G2 adds प. 16 तद्धे० G1, G2. 17 ०मे G1, G2. 18 अन्यान् is wanting in C. 19 कुर्याद् C, G1, G2, J, K. 20 सद्यन्तरं C, G1, G2, J, K. 21 ०र्माल्लं० C; ०र्माल्ल० G1, G2, J, K. 22 G1, G2 omit यद्धे. 23 आपश्च C. 24 यः K. 25 G1, G2, J omit लोपो. 26 ०पा G1, G2, J, K. 27 वे B. 28 मन्यत G1, J; मन्य तत् G2. 29 ०ऽयमहन्याम्या० G1, G2, J, K.

# अथ अष्टमः प्रपाठकः[1]

अथातो[2] अहीनाः[3]।
तेषामुक्तो द्रव्याणामन्वयः।
अथापि दशरात्राविलोपा[4]हीनाः।
तत्र सिद्धानि दाशरात्रिकाणि द्रव्याणि।
आहीनिक्यां[5] रात्रेः औतकक्षस्यर्चो[6]ऽपनयति[7]।
सत्रं चाहीनं[8] च व्यावि[9]वर्तयिषन्।
तत्रैताः करोति—
'पर्यंपर्यमित्सोतारः' इति। SV. 1. 123; 2. 1007; RV. 8. 2. 25.
एताः सुतवतीनाꣳ स्थाने सुतवत्य इति।
"मध्यमस्य रात्रिपर्यायस्य होतृषामणी विचारयन्ति।
दैवोदासं[10] वा स्यादौर्ध्वसद्मनं वेति।
विकल्पो वा स्यात्।" Say. PB. 9. 2. 12.
अपि[11] वा दैवोदासमहीने[12] कुर्यात्।
पूर्वाध्यायं पूर्वे यज्ञस्थाने, और्ध्वसद्मनं[13] सत्रेषु, उत्तराध्यायमुत्तरे यज्ञस्थाने।
अथाप्यस्मिन् सम्रवादरूपो भवति।
"और्ध्वसद्मनमपि शर्वरीषु प्रोहन्ति।" [इति[14]]। PB. 9. 2. 10.
अथ खल्वाह—"त्रिणिधनं भवति" इति। PB. 9. 1. 14.
कथं त्रिणिधनꣳ स्यादिति।
एतान्येवैं[15] निधनानि व्यवस्यन्त उपेयुः, सुवृक्तिभी २३४५ नृमादना २३४५ म् भरे २३४५ षु वा २३४५ इति।

---

1 In C only. 2 G1, G2 add ओं. 3 अहीनां B. 4 ०त्राविलोपो० B. 5 ०का रा० B. 6 ०सार्पेऽस० G1, G2, J, K. 7 ०पायति B. 8 वादीनां G1, G2, J. 9 व्यात० B, C. 10 ०सा G1, G2, J. 11 वापि G1, G2, J. 12 ०हीवने G1, G2, J. 13 अर्द्धस० G1, G2, J. 14 Wanting in B. 15 एतान्येतान्येव C; एतानेताने G1; एतानेव G2; एतान्येतानेव J.

तदाहुः[1]—जनेच्छं[2] त्रिणिधनं यदनन्तराणि[3] निधनानीति ।
अथवैतानि विहृ[4]तान्यनुपदमुपेयुः ।
तत्र निन्[5]दा यदनुपायान्निधनानामभिव्याहारः ।[6]
अथवा एतानि पृथक्स्तोत्रीयासू[7]पेयुः ।
तत्र[8] निन्दा यत् संप्रायाणां निधनानां विप्रयोगः ।
यथासमाम्नायमेवोपेयुः ।
अथापि यथासमाम्नायमेवै[9]र्तत् ।
स त्रिणिधनं भवतीति शाण्डिल्यायनः ।
यै[10]त्तिस्रो निधनं[11]मात्रा भवन्तीति सर्वेषु पदेष्वभ्यासात् ।
सौमेधꣳ रात्रिषामेत्याचक्षते ।
कौत्सं[12]मह्रीनादपनयति, सत्रं[13] चाह्रीनं च व्यौ[14]विवर्तयिषन् ।
तत्रैतदार्ष्ट[15]दꣳष्ट्रमृद्धिसꣳस्तावम् ।
'आ त्वा विशन्त्विन्दवः' इति । SV. 1. 197; 2. 1010; RV. 1. 15. 1.
एतास्वेताः सोम[16]वतीनाꣳ स्थाने सोमवत्य इति ।
समुद्रप्रवादा[17] आ[18]वत्योऽन्तेऽभिरूपा इति ॥ १ ॥

बुभूषयज्ञ उत्तरः ।
अपि वा षडहा[19]स्तिमुपकृतः स्यात्, एतेषाꣳ स्तोमानामुपधानात् ।
तत्रोमे साम्नी बार्हतं तन्त्रं[20] बृहत्पृष्ठ[21]स्योपवती[22] प्रतिप[23]त् ।
[ कस्य[24] हेतोरिति ।
बुभूषयज्ञोऽयं भवति ।
अनवधारितकाम इति लामकायनः ।
तत्र सर्वाभिप्रायां प्रतिपदमचिकीर्षीत् ।
अथापि षडहोऽयं संलक्षितः ।
सैषा षडहप्रतिपद् ] भवति ।

---

1 Wanting in B. 2 त्रैक्यं B; जनेच्छन् C. 3 ०दन्त० K. 4 वृह० B; हृता० G1, G2. 5 निन्दानुपायानां नि० B. 6 C repeats this line. 7 ०स्पेयुः G1, G2, J. 8 तन्निन्दा० B. 9 ०मेतत् C, G1, G2. 10 वक्ति ति० B. 11 ०नं न मात्रा G1, G2, J. 12 ०सं ही० B. 13 स्त्रि निधनं न मान्यं सत्रं चा० G1; स्रो निधनं न मात्रा सत्रे चा० G2. 14 व्यावर्त० B, C. 15 ०ष्ट्रा० B. 16 स्तोम० G1, G2. 17 ०दान् B. 18 भवत्यो० B; आवत्यान्ते० C; आवन्त्यो० K. 19 षडहा इति तदुपकृतस्यात् B. 20 तत्र B. 21 पृष्ठास्या० G1, G2, J, K. 22 ०वतीति C, G1, G2, J; ०वति K. 23 ०पक्षस्य G1, G2, J. 24 B omits कस्य ··· पद (line 25)

अथाप्युभे स्थानवती अचिकीर्षीत् ।

तन्त्रेण बृहत्प्रतिपदा रथन्तरमिति ।

अथाप्येतामेवान्यवेदाः समामनन्ति ।

आन्धीगवादुत्तरमाथर्वणम् ।

षडहोऽयं संलङ्घितः ।

तदेतत् प्रायश्चित्ति[1]साम ।

पशुकामयज्ञ उत्तरः ।

अपि[2] वा द्विरात्राप्तिमुपक्लृप्तिः स्यात्, एतेषां स्तोत्राणामुपधानात् ।

दशरात्राप्तिं वा, छन्दोमानामुपधानाद् ।

व्याख्यातमौ[3]भयसाम्यम् ।

अनुपूर्वं तन्त्रम्, द्वयान्याज्यानि, द्वयानि पृष्ठानि ।

द्वैविध्यात्[4] स खल्वाप्तोर्यामाणां पृष्ठानां वैश्वजितानि पृष्ठानि गर्भान्[5] करोति ।

एतानि नानात्वक्लृप्तानीति[6] ।

अथाप्येवमाप्तिरितरा[7] दशरात्रस्येति ।

स[8] कस्य हेतोर्गर्भान्[9] करोतीति ।

एवं हि शश्वद्बह्वृचा[10] अधीयते—गर्भवन्ति पृष्ठानि भवन्ति, आप्तोर्यामस्य तानि, गर्भकारं शंसेत्, पशवो वै पृष्ठानि, यद् गर्भवन्ति भवन्ति प्रजननेनैव पशून्त्समर्द्धयन्तीति ।

बृहद् वैराजगर्भं करोति ।

बार्हतं वै वैराजम् ।

तेनैव तदनुरूपगर्भं वामदेव्यं महानाम्नीगर्भं करोतीति[11] ।

आपो वै वामदेव्यम्[12] ।

आपो[13] महानाम्न्यः ।

तेनैव तदनुरूपगर्भं श्यैतं वैरूपगर्भं करोति ।

"पशवो वै श्यैतम् ।" PB. 7. 10. 13.

"पशवो[14] वैरूपम् ।" PB. 14. 9. 8.

तेनैव तदनुरूपगर्भं कालेयं रैवतीगर्भं करोति ।

ऐडं वै कालेयम् ।

---

1 °त्ति याम B, °त्तिः स्या मा C; °त्तिम G1, G2, J. 2 Wanting in G1, G2, J. 3 °त्वः K. 4 °विधात् G1, G2, J, K. 5 गर्भा C; गर्भा G1, G2, J. 6 नानाकृताप्तनीति B. 7 °प्तित° G1, G2, J, K. 8 Wanting in G1, G2, K. 9 °र्भानि G1, G2, J. 10 °च G1, G2, J, K. 11 करोति C, G1, G2, J, K. 12 Wanting in G1, G2, J. 13 आपो G1, G2, J. 14 PB adds वै.

ऐडा रैवत्यः ।

तेनैव तदनुरूपगर्भम् ।

अथो[1] द्रवदिडं कालेयम् ।

केस्तेडा[2] रैवत्यः ।

"तस्मिन् मिथुनादेव[3] प्रजायते" इति । cp. PB. 16. 14. 6; 19. 11. 7.

"अपि वा सर्वाण्यावर्तीनि[4] वैश्वजितैरा[5]वृत्तिभि[6]र्गर्भं भवन्ति[7] कुर्यात् ।

तत्र बृहत् सञ्चरते ।

तस्य वैरूपं विधूत्या[8] इति ।" Ārṣ. K. V. 86b.

"तत्र[9] गर्भ[10]विधान[11]माहुः—मध्यमं पर्याय १ स्वस्तोत्रीयं[12] गर्भं कुर्यात्[13], प्रथमोत्तमौ मुख्यस्य, एवं गर्भोपपत्तिर्भवतीति ।" Ārṣ K. V. 86a.

"कथं धर्माः[14] ।

[कर्तव्या[15]] इत्येके ।

गर्भभूतानि भवन्त्यनुभूतानि[16], अधर्मा गर्भो भवतीति ।

कर्तव्या[17] इत्याचार्याः ।" Ārṣ. K. V. 87a.

तत्र तान्येव वचनानि[18] यानि विश्वजिति, सुरूपं जराबोधीयस्य स्थाने, एतत् पशुस २ स्तावमिति ।

उद्धरत्याथर्वणं द्विपदा ।

अत्र करिष्यन् भवति ।

तथैतत् सौद्ध[19]विषमभ्यस्तगीत्यतिरिक्तमतिरिक्ते[20] कल्पे[21] ॥ २ ॥

प्रजाति[22]कामयज्ञ उत्तरः ।

तत्र यो द्रव्यविकारः प्रजाति[23]कामयज्ञत्वात् स भवति ।

व्याख्याता उत्तरे ।

अथै[24]ते[25] एकस्तोमाः, एतान् कामानभ्युपक्लृताः ।

यथैतद् ब्राह्मणम् ।

---

1 अथो B. 2 कम्रस्ते० B. 3 G1, G2, J, K add मिथुनं. 4 ०वर्तीति G1; ०वर्तीभि० G2; ०वर्तीमि J; ०वृत्तीनि K. 5 विश्व० G1, G2, J. 6 ०वृत्तिभि० K. 7 ०र्गर्भं भवन्ति G1, G2, J. 8 ०विधू० B. 9 Wanting in B. 10 G1, G2, J add विधानं. 11 ०र्भाधान० B. 12 सस्तोत्रीयं C, G1, G2, J, K. 13 कुर्वात् C. 14 C, G1, G2, J, K add इति. 15 Wanting in B. 16 ०नुभ्यभू० G1, G2, J; ०नूभ्यभू० K. 17 C, J repeat here कथं धर्मा ... भवतीति. 18 विव० C, G1, G2, J. 19 सौविष्म० B. 20 ०क्तमतिरिक्ते G1, G2, J, K. 21 Cख, G1, G2, J, K write the first three sentences of the next section after कल्पे. 22 प्रजापतिकाम० Cख; प्रजापतियज्ञ G1, G2, J, K. 23 प्रजापति० G1, G2, J, K. 24 G1, G2, J, Cख, K begin the 3rd section from here. 25 ०वैकत G1, G2.

अथाप्येकस्तोमान्यहीनिकान्यहानि ।
सोऽन्ते न्यायमदिदर्शयिषीत् ।
तत् खलु बृहद्रथन्तरपृष्ठान् कुर्मः ।
राथन्तरबार्हता ह्येते स्तोमा इति ।
ज्यौतिष्टोमं तन्त्रम् ।
ज्यौतिषा ह्येते स्तोमा इति ।
तत्रानुपृष्ठं द्रव्यागमः ।
षोडश्याः षोडशिनोऽनुब्राह्मणं वेति विचारयन्ति ।
किꣳ स्तोमा अनुब्राह्मणꣳ स्युरिति ।
एकविꣳशस्तोमा इति ।
एष एषां प्रकृतिस्तोमो भवति ।
अथाप्याहुः—अर्हस्तोममहः प्रथमोत्तमयोरन्वियाताम् ।
एकविꣳशं तु पञ्चदशस्य कुर्यात् ।
पञ्चदशꣳ सप्तदशस्य ।
एवं तꣳ स्तोमꣳ सꣳस्तुतोऽतिरात्रः सम्पद्यते ।
अथो यस्तस्याह्नो भवति, अहस्तोमं त्वेवान्वियुरित्यनुब्राह्मणम् ।
अनुव्यूहमित्येतत् स्यात् ।
यो वा ह्यह्नः स्तोमः स षोडशिनो[14] न्यायेन ।
यो वा ह्रसीयानित्यह्नः स्तोमं चैनमनुयन्तं पश्यामः ।
"अथातो द्विरात्राः ।
तत्र ज्योतिष्टोमसर्वस्तोमौ समस्यति ।" cp. PB. 20. 11. 1.
मा विलोपे भूयान् विलोपो भूदिति च दाशरात्रिकाणामह्ना द्वे करोति ।
अथैतानि दशरात्रस्यान्त्याहानि चतुर्थषष्ठे नवमदशमे इति ।
एतेषां द्रव्याण्यहीनान्तेषु चिकीर्षितानि ।
तत्रोत्तरत्र बहिष्पवमानम् ।

1 ॰न्तन्या॰ C. 2 ॰र्थं G1, G2. 3 तान् G1, G2, J, K. 4 रथ॰ C, G1, G2, J. 5 ज्योति॰ C, G1, G2, J. 6 ज्योति॰ C, J. 7 ॰शाः B, G1, G2, J, K. 8 अस्तोममह G1, G2, J, K. 9 ॰न्वितायामे॰ G1, G2, J, K. 10 ततꣳ॰ G1, G2, J. 11 ॰न्वी॰ B, G1, G2, J, K. 12 ॰णमिति C, G1, G2, J, K. 13 अतनु॰ B. 14 Wanting in G1, G2, J, K. 15 ॰शिन्यो B; ॰शिना G1, G2, J, K. 16 ॰यादि॰ C. 17 ॰रः G1, G2, J, K. 18 चैवम॰ K. 19 ॰यत्त C. 20 ॰भूरिति G1, G2; भूरिती J, K. 21 ॰णां न C, G1, G2, J, K. 22 ॰न्ता॰ C, G1, G2, J, K. 23 ॰न्ते G1, G2. 24 ॰त्तम G1, G2, J, K.

अन्यत् प्रतिपदो नावमिकम् ॥ ३ ॥

अथैते हाविष्मतहाविष्कृते ।
हाविष्कृतं[1] पूर्वस्याह्न आर्भवचरꣳ स्थानापन्नं भवति ।
द्वितीयस्थानं च हाविष्मतम्, उत्तरस्य माध्यन्दिने सꣳहितं च ।
भागविलोपे भागसन्तानाय निकामयते ।
अपि चैव[2] सती नेदीयसी हाविष्मतहाविष्कृते भवत इति ।
जनुषैकर्चाविहर्गणन्यायेन त्रैशोकवैखानसे जागतस्य भागस्यानुग्रहाय ।
अहीनान्तेष्वकार्श्चिकीर्षिताः ।
सꣳरोधान्विह दीर्घतमसोर्कः[3] ।
विपर्ययेणे[4]तरयोराप्तिः ।
स यदेतास्वेव[5] स्वयोनिः[6] ।
अथाप्येतौ[7] धूतवत्यो दक्षितवत्योऽ[8]न्तेऽ[9]भिरूपा इति ।
[10]ज्योतिष्टोमान्युक्थान्यहीनान्तेषु चिकीर्षितानि ।
एवं पथ्यावसानमिति ।
आयुषमुत्तरस्य द्वितीयं करोति ।
एते समायास्त्रिकद्रुका इति ।
बृहत्पृष्ठं बार्हतं[11] तन्त्रं[12] द्वितीयꣳ हि स्थानमापन्न[13]मिति ।
उद्धरत्यन्तलक्षणानि—त्रिणवत्रय[14]स्त्रिꣳशयोरन्वपायं[15]मुत्सेधनिषेधौ परिस्थानमिति ।
जराबोधीयमहीनेषु चिकीर्षितम् ।
एतच्छन्दोमसामेति ।
तद्यदुष्णिहि राथन्तरात् स्तोमा[16]च्छुध्यमविच्यावयिषीत् ।
उद्वꣳशीयं तैरश्च्यं वेति[17] विचारयन्ति ।
पूर्वस्याह्न उक्थान्त इत्य[18]ह्नोद्वꣳशीयम् ।
उपक्रमणीयमहरिति तैरश्च्यम् ।
अषोडशिका रात्रिः स्तोमं[19]शात्रेण[20], अषोडशिकौ[21] ह्येवायुर्भवतीति ।

1 ०ष्मतं K. 2 ०चौव० G1, G2, J, K. 3 ०सोक्तः B. 4 अभिपर्यय० B; विपर्येतर० G1; विपर्ययेतरे० G2. 5 ०स्वेवाप्सु C, G1, G2, J, K. 6 स्वरसोनिः G1, G2, J; स्वरसोनिः K. 7 ०तामधू० B. 8 ०तव्यो० B. 9 ०ऽते० G1, G2, J, K. 10 ज्यौति० G1, G2. 11 ०तत K. 12 तत्र B. 13 ०पत्रा इति. 14 त्रय is wanting in G1, G2, J, K. 15 ०पावायासु० B. 16 ०ध्या० B; सोमांकुध्यसवि० G1; सोमाच्छुध्यसवि० G2, J; ०मांक्षु० K. 17 विति J. 18 दत्यहो० G1, G2, J, इहो० K. 19 ०मं शा० B. 20 ०कात्रेण पो०. 21 ०कोऽस्रे० B, K.

" 'त्रिवृत्पञ्चदशोऽग्निष्टोमः ।' PB. 20. 13. 1.

उत्तरस्य पूर्वं[1]मेकस्तोम[2]तामिवा[3]ह्नो दिदर्शयिष[4]न्नायुषो[5] प्रच्यु[6]तं पञ्चदशं पूर्वस्मिन्नहन्यनुगृह्णाति ।

तत्र यदेतत् स 'रूक्षोऽभवत्' इति । PB. 24. 13. 2.

कपिवनो[7] भा[8]यजात्यश्चा[9]तूरात्राय जामदग्न्ये[10] दिदीक्षे[11] ।

ब्रह्मचारिणं सम्पन्नकुलीनमपः प्रहृत्य ।

तस्य त्रिवृतपञ्चदशमहरुपेतं बभूव ।

अथेतरस्तमर्थं साधयित्वा प्रत्याजगाम ।

सामायमिमं[12]महर्यागं निशी[13]शमतेति ।

आयुरतिरात्रमुपदधौ, ब्रह्मचारिणश्च परिहारेण यज्ञप्रत्यवहारेण[14] च[15] रूक्षो[16] बभूव ।

यस्त्वेतौ दोषौ परिहरेन्न रूक्षः स्यादिति ।" Caland PB. 20. 13. 4; cp. PB. 20. 13. 4, 5; ĀP. Ś. 22. 14. 20.

पूर्वे[17]णैव द्रव्यकल्पो व्याख्यातो व्याख्यातः ॥ ४ ॥

[18]द्वितीयः पटलः

अथातस्त्रिरात्राः ।

तत्र वामदेव्यं तृतीये[19] पृष्ठे[20] करोति ।

लोकविधां त्रिरात्र उपकृतः ।

एतानि लोके[21]सामानीति ।

तानि कुशलं यथयथाभक्ति निदधाति ।

तन्त्रेषु विप्रतिपद्यन्ते ।

आहीनिकतन्त्राणीति गौतमः ।

तद्गायत्रीभिर्विजानीमः ।

एकैवात्राहीनिकी भवति ।

'अस्य प्रत्नाम्[22]' इति । SV. 2. 105; RV. 9. 54. 1.

---

1 पूर्वं एक० C, K. 2 ०स्तोना० G1, G2, J. 3 ०वान्यो B. 4 निर्दिशयि० K. 5 ०षः B. 6 प्रच्यु G1, G2, J, K. 7 कषवनो B. 8 भाव० B. 9 ०श्वात्तरा० G1, G2, J; ०श्वतराय K. 10 ०न्यायय B. 11 ०क्षेद् B. 12 ०मिदहर्योगाद B. 13 शी० B. 14 Wanting in G1, G2, J, K. 15 चारू० B; च नरक्षदिति G1, G2; च नरूक्ष स्यादिति J, K. 16 G1, G2, J omit रूक्षो ··· न. 17 पूर्वे J. 18 In B only. 19 द्वितीये B. 20 ०ष्ठ G1, G2, J; ०ष्ठं K. 21 लोके सा० C, G1, G2, J, K. 22 प्रत्ना B, C, G1, G2, J, K.

ता यत्करोति सहस्रवती सहस्रवंत्तदभिरूपेति ।
एकाहिकानीति धानञ्जय्यः ।
तद्गायत्रीभिरेव जानीमः ।
एकैवात्राहीनिकी भवति ।
"प्र सोमासो विपश्चितः" इति । SV. 1. 478; 2. 114; RV. 9. 33. 1; PB. 11. 3. 1.
यत् करोति प्रवत्युपक्रमेऽभिरूपेति ।
अहरहरेवाहीनैकाहाभ्यां वर्तेत इति शाण्डिल्यायनः ।
एवं युक्ता एता गायत्र्यो भवन्ति ।
अथ खल्वत्र भागविपर्ययो भवति ।
लोकविधां त्रिरात्र उपकृतः ।
तं यथाभक्त्यचिकीर्षीत् ।
ते एते परेऽहनि भागविपर्ययाद् द्व्यसमासेन वर्तेते ।
द्वितीयेऽहनि स्थानिस्थानि द्वैतीयिकानि, भागान्वितानि तार्तीयिकानि ।
एतदेव विपरीतम् ।
तृतीये खल्वत्र द्व्यान्यक्षररूपाणि क्रियन्ते ।
प्रजापतेश्च वागक्षराण्यक्षराक्षराणि च ।
आज्यादिषु प्रजापतेर्वागक्षराणि, यथोपलम्भमहस्संक्षराक्षराणि ।
एकाक्षरणिधनं यौधाजयम् ।
एष आचार्यसमयः ।
अथाप्याह—"यदाक्षराणि प्रथममहर्भजन्त" इति । PB. 21. 5. 4.
व्याख्याता अर्काः, तथाज्यदोहानि ।" cp. PB. 21. 5. 5.
पूर्वावर्कौ व्यत्यस्यति ।
अक्षरणिधनं प्रथमेऽहनि विकीर्णमाज्यदोहानां प्रथमं तृतीये ।
एवमिव ब्राह्मणं भवति—अथाप्येषामेतद् त्रिणिधनं तृतीयेऽभिरूपम् ।

1 सहस्रदत्तावभि० B; सहवत्तावभि० G1, G2, J, K. 2 C, G1, G2, J add तां. 3 सहस्रवती सहत्तावभि० G1, G2; सहस्रवती स( ०हस्र K )भत्तावभि० J, K. 4 अहरेकाहीनैकाहाभ्यां G1, G2, J; अहरहरेकाहीनैका० K. 5 पर्वत G1, G2, J, K. 6 ०न्नीति C, G1, G2, J, K. 7 ०र्धन् B. 8 ०या B, G1, G2, J, K. 9 द्वादमासे G1, G2, J. 10 वर्त्तते K. 11 ०हस्रा C, G1, G2, J, K. 12 स्थानिस्था० G1, G2, J, K. 13 दि० K. 14 तार्तीयानि G1, G2, J, K. 15 ०ये मथ ख० K. 16 वागक्षराक्षराणि C; वागक्षरा G1; वागक्षराक्षरा G2, K. 17 ०महःस्वक्षण्येका० G1, G2; ०महस्वक्षण्येका० J; ०महःस्वक्षरा अक्षण्येक० K. 18 ०क्षाराणि C. 19 ०स्य स्यक्ष० C. 20 ०कीर्षि० J, K.

अनुष्टुभि[1] प्रथमस्य करोति ।

अत्रैव सन्ताना[2]र्थानि भवन्ति[2] ।

सन्ताना[3]र्थमिदं भवति ।

द्व्युत्तरणिधनत्वादनुच्छन्दसम् ।

इतरयोरैडमन्त्यं करोति ।

इडानुग्रहार्यं[4] बृहतीं[5] वा स्वेन सामान्तेना[6]पिपादयिषेत्[7] ॥ ५ ॥

उपवती[8] द्वितीयस्य प्रतिपन्न[9]वमात् स्तोमा[10]न्विता ।

'कया ते अग्ने अङ्गिरः'[11] [12]इति होतुराज्यम् । SV. 2. 899; RV. 8. 84. 4.

केति तृतीयमिति हि भवति[13] ।

अथाप्या[14]ह—"यत् साम स्तोमो भवति तदाज्येषु । निराह" इति । PB. 11. 2. 1, 2.

ता[15] एता[16]: कवत्यो[17] यथा वामदेव्यस्यर्चो[18] दाशरात्रिकाण्युत्तराणि सन्तनीति[19] ।

स्वयोनीति[20] होतृकपृष्ठान्येतानि ।

छन्दोमत्र्यहे प्रायश्चित्ता[21]र्थं गायत्रपा[22]र्श्वं मैत्रावरुणसाम ।

एतद् वामदेव्य[23]सदृशम् ।

तत् खलु बृहतीषु करोति[24] त्रिस्था[25]नां बृहतीं पृष्ठेषु चिकीर्षन् ।

अथाप्यस्मि[26]न्नक्षराक्षरं भवति ।

ककारपकारादिरकारः सन्तनि ब्रह्मसाम ।

'अस्तावि मन्म पूर्व्यम्' इति । SV. 2. 1027; RV. 8. 52. 9.

एता ब्रह्मप्रवादा इति ।

संकृत्य[27]च्छावाकसाम नवमाद् भागान्वितम् ।

अथ खल्वत्र[28]जामि भवति ।

लोकविधा त्रिरात्र उपकृतः[29] ।

सम्भिन्नमाभ्यां लोकाभ्यामन्तरिक्षमिति ।

---

1 अनु प्र० C, K. 2 C omits सन्ताना० भवन्ति. 3 ०र्थानिदं G1, G2, J, K. 4 ०ग्रहो C; ०ग्रहोय G1, G2, J, K 5 जगतीं C, G1, G2, J, K. 6 ०न्ते तेना० G1, G2, J. 7 ०षत् B. 8 उपपदी B. 9 ०न्नस्य च पाद् G1, G2; ०न्नस्य वमाद् K. 10 भागान्विता C, G1, G2, J, K. 11 ०रसः C, G1, G2, J. 12 Wanting in G1, G2. 13 ०तीति C, G1, G2, J, K. 14 अथा प्रा० G1, G2, J, K. 15 Wanting in G1, G2, J. 16 ताः G1, G2, J, K. 17 आपत्यो B. 18 ०ष्यर्चो C, G1, G2, J. 19 ०नोति B 20 ऽस्तायानीति G1, G2, J. 21 ०त्रार्थे C 22 ०पार्श्व G1, G2, J. 23 ०व्यं स० B. 24 करोतीनि B. 25 त्रिस्यानां C. 26 ०न्नवाक्ष० C. 27 सन्तन्यच्छा० C. 28 ०त्र जा० C, G2, J, खलुत्र० G1. 29 उपा० G1, G2, J.

पाञ्चमिकीं ककुभं करोति ।
तस्यां[1]मक्षराक्षरं भवति ।
ककारषकारादिरकारः पिपीलिकामध्यां करोति ।
षाणुक्तोऽयं त्रिरात्रः ।
तत्रोभावाकारा[2]वनुष्टुभामचिकीर्षीत् ।
नावमिकीरुत्तराः ।
अक्षरसमासो हि तार्तीयिकेषु[3] ।
तासां मध्यमामुद्धरति ।
दशरात्रलिङ्गेति ।
तत्रैतां करोति ।
'तं५ सखायः पुरूरुचम्' इति । SV. 2. 1030; RV. 9. 18. 12.
एषा सखिमती यथा वामदेवस्यर्चः ।
ता यदावर्तयति परिवत्या प्रक्रमं परिजिहीर्षन् ।
नानाग्निष्टोमसामानि ।
नानात्वा[4]वृत्तार्थो नानाछन्दः[5] ।
स्वावृत्तेष्वेवं भूयो[6] नानात्वमिति ।
स यदिहानुष्टुभं[7] करोति ।
बृहतीः कृत्वानुष्टुभा वेलेति[8] ।
तत्रैतद् विशोविशीय५ स्वयोन्यापन्नं पुरस्तादेतत् स्थानम् ।
वाक्[9]प्रवादोऽत्र भवति ।
भागान्वितान्युक्थानि ।
'होता देवो अमर्त्यः' इति । SV. 2. 827; RV. 3. 27. 7; 8. 19. 24.
तृतीयस्य होतुराज्यम्[10], हो इति तृतीयमिति हि भवतीति ।
गोषूक्तं[11] प्रायश्चित्तिसाम ।
एतस्मिन्नक्षराक्षरं भवति ।
रेफादिरकारः सतोबृहतीं करोति ।
त्रिपदा त्रिरात्रेऽभिरूपेति ।
सत्रासाहीयं मैत्रावरुणसाम ।
एतद् वामदेव्यसदृशम् ।

1 एतस्यामक्षरं C, J, K; एतस्यमक्षरं G1, G2. 2 °राऽनु° C; °रानु° G1, G2, J, K. 3 °कीषु C, G1, G2, J, K. 4 नानात्वार्थो C, K. 5 साव° B. 6 °भूतो B. 7 °भः C, G1, G2, J, K. 8 चो भवति Ck. 9 चार्क° B. 10 G1, G2. J repeat it. 11 गौ° B, K.

पुरस्ताद[1]ेतत् स्तोभं बहिःस्वारम् ।
यथा वामदेव्यम् ।
वारवन्तीयमग्निष्टोमसाम ।
एतद् गायत्रीसामापन्नं पुरस्तादेतत् स्थानम् ।
वाक्प्रवादोऽत्र[2] भवति ।
वागुक्तोऽयं[3] त्रिरात्रः ।
अपि वानुष्टुभोपपत्त्यां[4] वाक्प्रवादेनानुग्रहो भविष्यतीति ।
अक्षरविक्रमेऽयं[6] त्रिरात्रः ।
अपि वानुष्टुभोपपत्त्याक्षरप्रवादेनानुग्रहो भविष्यतीति ।
विद्वानविद्वानिति तु भवति[7] ।
नानासाधुरयं त्रिरात्रः ।
तत्र नानर्त्विजोऽचिकीर्षेत्[8] ।
कथमविद्वानृत्विक् स्यादिति त्वेवैतत् सदस्यान्[9]नेव प्रतिग्राहकान् कुरुत इति ॥ ६ ॥

राजयज्ञ उत्तरः ।
तस्य यदेवरविधोऽह्नर्योगः ।
एतान्यन्[10]ताहानि, अन्तो हि राजेति ।
महानाम्नी[11]र्मध्यमस्याह्नः पृष्ठं करोति ।
सर्वच्छन्दस्यास्[12]ते ।
सर्वपशूनामालम्भो[13] भविष्यतीति ।
अथाप्येता वज्रोक्ता राजयज्ञेऽभिरूपाः, वज्री हि राजेति ।
कथं घर्मा इति ।
कर्तव्या इत्येके[14] ।
[15]ते चैव करणवर्णा ये वज्रे ।
अपि चेह स्वस्थानतराः पृष्ठं च हि भवन्ति ।
अहीने च ।
अथापि यद्विदमिहाशान्तं क्रियते ।
सर्वपशूनामालम्भोऽप्यभिमेथि[16]काः पृष्ठविलोपः ।

1 अपु॰ C, उपुर G1, G2, K, उत्पुर J. 2 ॰दो G1, G2, J. 3 ॰के॰ G1, G2. 4 ॰त्रे G1, G2, J. 5 ॰पयत्या B; पथत्या G1, G2, J, K. 6 ॰मो॰ B. 7 ॰न्ति C. 8 ॰र्षेद् B. 9 ॰स्था॰ B. 10 ॰भ्यन्तरानि G1, G2; ॰न्यन्तो॰ K. 11 ॰म्नि G1, G2, J, K. 12 ॰न्दस्स्यासु C, ॰न्दःस्यासु G1, G2, J; ॰न्दस्यासु K 13 C adds न. 14 ॰त्येते C. 15 C, G1, G2, J, K add तत्र. 16 ॰नेधिकाः B; ॰मेधिकां G1, G2; ॰मैधिकां J.

तत्रापः शान्त्यर्थाः[1], ते क्रियमाणा बृहद्रथन्तरयोर्धर्मान् कारयेयुरिति ।
अथापि संयुक्तधर्मा इति ।
अथ बृहद्रथन्तरयोर्धर्मान्नि[2] कुर्युः ।
[महानाम्नीवलान्तु[3] नूनम् ।][4]
महानाम्नीनां[5] धर्माः क्रियेरन्निति ।
अकर्तव्या[6] इत्यपरम् ।
तत्रै[7] ते[8] वैयाकरणवर्णा ये वेत्रे[9] ।
अपि च यः स्वाध्यायधर्मान्[10] प्रतीयात्[11] कृत्स्नान् प्रत्येतुमर्हतीति[12] ।
तेऽवेलायां[13] नोर्ध्वं[14] माध्यन्दिनीन् महानाम्नीभिः स्तुवीरन् ।
एका[15] वा द्वौ वा सम्प्रगायेतां नेतरे[16] शृणुयुरिति ।
एतान्येवमकुर्वतो[17] निर्वचनस्वा[18]ध्यायधर्मः ।
अथापि यो बृहद्रथन्तरयोर्महानाम्नीकारितान् धर्मान् मन्येत भूयेष्वा[19]-
ल्पीयसेऽनुसंहरेत् प्रत्यक्षे च परोक्षायां[20]नुचर्य्यं गमयेदिति ।
अतस्तत्पापीयो[21] बृहद्र[22]थन्तरधर्मान्कृ[23]त्वा महानाम्नीनां धर्मान् कर्त्तव्यान् मन्येत ।
सं[24]मानोत्पा[25]दानां समानविधानानां सतां[26] य एकान्[27] कुर्यात् ।
एकान् न किं सोऽत ऊर्ध्वं न[28] व्यौ[29]हन्यात् ।
व्याख्याता अनुष्टुभः प्रतिपदश्चतुष्टोमे[30] ।
ताभिः प्रच्युं[31]तामुपवतीं द्वितीयेऽहनि प्रतिपदं करोति ।
कविमन्तं प्रथमात् प्रच्युतं तृतीयेऽहन्यनुगृह्णाति ।
वामदेव्यं महानाम्नीभिः प्रच्युतं स्वे स्थानेऽनुगृह्णाति ।
पार्थुरश्मं ब्रह्म[32]साम ।
पङ्क्तिप्रतिप्रयोजना महानाम्न्यः ।

1 ०र्या G1, G2, J, K. 2 ०र्ईमर्नि G1, G2; र्ईर्मांश्च J. 3 ०लान्तु C, G1, G2, J, K. 4 Wanting in B. 5 ०म्नीनौ G1, G2, J. 6 ०व्य G1, G2 7 Wanting in G1, G2, J. 8 Wanting in B. 9 त्रे G1, G2; त्रे J, K. 10 ०ध्यायमनिवायाकृ० G1; ०ध्यायधर्मा तवायाकृ० G2; ०ध्यायधर्मातवयाकृ० J, K. 11 प्रतिपदं B. 12 ०र्हति B. 13 ते वे० C. 14 नोर्धस्तन्मा० C; नोस्ते मध्य० G1, G2, J, K 15 एका B. 16 इतरे G1; रेतरे G2, J. 17 ०र्वन्तो C, G1, G2, J, K. 18 ०नः स्वा० G1, G2, J, K. 19 भूयसश्च० B. 20 या is wanting in G1, G2, J; ०क्षया० K. 21 C, G1, G2, J add यो. 22 बृहद् is wanting in G1, G2. 23 ०नु कृत्वा B 24 सामान्यो० G1, G2, J, K. 25 ०त्पादनं० G1, G2; त्सदानां० J. 26 सतान् G1, G2, J. 27 एतान् B. 28 ०ः० C. 29 न्याह C, G1, G2, J, K. 30 ०मैना० C, G1, G2, J. 31 प्रस्तुता० G1, J. 32 बृहत्साम B.

एतत् पाङ्क्तं त्रसाम, अथकारणिधनम् ।
ताभ्यां प्रच्युते सन्तनिनी माध्यन्दिनेऽनुगृह्णाति ।
आशीःसा[1]मनी मां[2] प्रत्यो[3]षातामिति ॥ ७ ॥

अथैतस्य एतन्तकस्य प्रथमेऽहनि वैष्णवीष्वनुष्टुप्सु पावमानीषु[4] बहिष्पवमानं[5] कल्पयेदित्येक आहुः ।
एतत् प्रकृतौ दृष्टं भवतीति[6] ।
नैतद्यु[7]क्षु स्तोमेषूपपद्यत इत्यपरम् ।
एतस्मिन्नेव बहिष्पवमाने गायत्रीः पावमानीरावपेत् ।
एतदि[8]ह हार्वि[9]ष्कृतं भवतीति[10] ।
चतुष्टोमकारितास्ता भवन्तीत्यपरम् ।
गायत्रीष्वेव कल्पयेदिति ।
अथ खल्वाह—एते एव पूर्वे अहनी इति ।
तत्रैके पातन्तके प्रतियन्ति ।
एतं विधाय प्रदेशो भवतीति ।
प्रकृत्यपश्रया विकारा भवन्तीत्यपरम् ।
प्राकृतस्यै[11]वाश्वमेधस्य प्रतीयादिति ।
अथापि ते नानास्तोमाः ।
एकस्तोमोऽयं[12] भवति ।
तत्र स्वतन्त्रा एकाहाः स्युरित्येके ।
बहुधै[13]काहानां स्वातन्त्र्यं दृश्यते ।
यथा—आयुष्कामे षड्रात्रै[14]र्नवरात्रयोरिति ।
त्रि[15]रात्रतन्त्रा इत्यपरम् ।
एवं च तन्त्राविलोपः । 'cp. LS. 9. 11. 13.
अपि चैषोऽहीनन्याय इति ।
अपोडशिके[16] गोआयुषी इत्यपरम् ।
एवं दृष्टे[17] च, अपि चैवं प्रदेशो भवतीति ।
अथैष वैदत्रिरात्रैः[18] ।

1 ०सामनि B, ०सामानी C. 2 वा G1, G2, J, K 3 प्रत्योयोन्दता० B, प्रत्येषाता० C. 4 ०नीभिर्बर्हिषु B. 5 ०मानिनं G1, G2, J. 6 ०वती B. 7 ०दृष्टुः C, ०द्युक्षुः G1, G2, J. 8 ०दिसा G1, G2, J, K 9 हार्षिकृत G1, G2, J. 10 ०वति K. 11 ०स्यैवने प्र० G1, G2, J, ०स्यैवाने० K 12 ०मो यत् भ० C, G1, G2 J; ०मो यद् भ० K. 13 बहुभ्नेका० B. 14 ०त्रे न० C, G1, G2, J, K. 15 त्रि is wanting in G1, G2, J, K. 16 ०को B. 17 दृष्टे B. 18 ०स्य त्रि० G1, G2, J

तस्य त्रिवृत्स्तोमाः स्युः ।
षोडशिन उत्तमस्यातिरात्रस्य षोडशं प्रथमं रात्रिषाम ।
एवं तावत् स्तोत्रीयो यथा त्रिरात्रः ।
नाना षोडशसामानि नानैत्वार्थः ।
नानदं प्रथमः ।
उद्वंशीयं द्वितीयः ।
एतदानुष्टुभं हरिवर्णोनि, यथा गौरीवितम् ।
तस्य स्थाने तैरश्च्यम् ।
एतत् पूर्वाभ्यां सप्रायं न्याँच्य उत्तमे षोडशिं ।
अथैत उत्तर एतान् कामानभ्युपकृताः ।
यथैतद् ब्राह्मणम् ।
स्तोमकारित आवापः ।
अन्तर्वसावप्रत्यवरूढानि उत्तमस्याह्न उक्थानि ।
लोकविधां त्रिरात्र उपकृतो रोहोपकारः ।
अथाप्येवमभ्याहृतं सवनमिति ।
न्यायकृत उत्तरो न्यायकृत उत्तरः ॥ ८ ॥

तृतीयः पटलः

"अथैष चतुर्वीरो बृहद्रथन्तरपृष्ठ एव ।
न हि षाडह्निकान्यनुभवन्ति ।
नान्यो व्यलुलुप्सीत् ।" Ārs. K. V. 74 b.
ते यज्ञानाच्छन्दस्सु ब्राह्मणेनैव तद् व्याख्यातम् ।
कानि तन्त्राणीति ।
चतुरहतन्त्राणीति गौतमः ।
तद् विजानीमः ।
चतुर्थेऽहनि चतुर्थप्रतिपदमादिश्यैकाहतन्त्राण्यभिमुपजिगमिषमस्य प्रज्ञां करोतीति ।
त्रीण्यहीनिकानि ।
एकमैकाहिकमिति धानञ्जय्यः ।
एवं ऐर्वणाहीनस्याद्दर्नेम् ।

1 स्तोमो C; ०मा G1, G2, J, K. 2 ०ष्ठि० K. 3 नात्वा० G1, G2, J, K. 4 न्याम्यत B. 5 ०वास्य B. 6 एतां C. 7 उच्छको० B. 8 In B only. 9 नो B, K; नानो G1, G2, J. 10 Wanting in G1, G2, J. 11 ०द्वैका० C, G1, G2, J, K. 12 ०मेकैका० G1, G2, J. 13 प्रवणा० G1, G2, J. 14 ०दनन्तम् B.

एकाहतन्त्रा[1]द् रात्रेरुपायः ।
स यदे[2]तदनन्ततन्त्रतरꣳ स्तोमकारित आवापः ।
उद्धरति जनुपैकर्चौ स्तोमकल्पार्थः ।
तत्र ज्योतिष्टोमौ[3] करोति ।
तयोः स्थाने ना[4]नापवमानिकेभ्यो नानात्वार्थः ।
अथ यत्रा[5]यमर्थो भवति साप्तमिकीं तत्र ककुभं करोतीति[6] ।
असञ्चाराय तत्र खलु पदै[7]स्तोभान् करोति ।
चतुरोऽयं[8] वीरानुपकृतः ।
त एते चत्वारः समानयोनयः समानार्षेयाः पुन्नामधेया गणेडा गणनिधनाः ।
अपि वा चातुर्वि[9]ध्यादेव क्रियेरन् ।
ताꣳस्तु यदेवं प्रयुं[10]क्ते, एवमिं[11]डान्तो रोहः ।
अपि चैवं दाशरात्रिकोऽवं[12]साने[13] भवतीति ।
तान् खल्वन्त्यान् करोति ।
अत्रैषाꣳ स्वच्छ[14]न्द इति ।
तत्[15] कुशलं[16] यन्नित्यासु ।
'धर्त्ता दिवः' इति । SV. 1. 558; 2. 578; RV. 9. 76. 1; PB. 14. 9. 4.
उत्तम एतासु स्वयोनिः ।
अथाप्येता अन्तलक्षणैः सम्पन्ना इति ।
व्याख्याता अर्काः ।
तेषां [18]तदेवानुपूर्व्यं यत् त्रिरात्रे गोपूं[19]क्तं प्रायश्चित्तिसामं[20] ।
पदस्तोभवां[21]धितमर्कं द्विपदास्वनुगृह्णाति ।
तेन प्रच्युतꣳ वारवन्तीयमुष्णिह्यन्तसाम मा प्रच्योष्टेति विपरिहरति ।
आनुष्टुभेऽजाम्यर्थः ।
एतेनैवोत्तरे व्याख्याताः ।
उद्धरति पदस्तोभान् ।
न ह्येते चतुरो वीरानुपाकृताः ।

1 ०न्त्राया त्रे० G1, G2, J. 2 यदेतदेतत्तन्त्रान्तरꣳ C, यदेनदन्तत्रतरꣳ G1, G2, J, K. 3 ०ष्टौ C, G1, G2. 4 नावमिक्यौ C, G1, G2, J, K. 5 यत्र षडहो० C, G1, G2, J, K. 6 ०रोति C, G1, G2, J, K. 7 पाद० B 8 B adds चतुरो. 9 ०र्विद्ध्या० K. 10 प्रयन्ना B. 11 ०डातो C, G1, G2, J, K. 12 ०त्रिकौव० G1, G2, J, K. 13 ०सानो C. 14 स्वं छन्द C, स्वंद G1, G2, J. 15 तान् C, G1, G2, J, K. 16 ०त्त्वं B 17 धर्ता B. 18 यनदे० G1, G2, J यत्तदे० K. 19 गौ० K. 20 ०सामा: G1, G2, J, K 21 ०बाधम० C G1 G2 J, K

तत्र कुशलं यन्नित्यादि[1]पदस्तोभापायादर्कः स्वꣳ स्थानꣳ समापद्यते ।
तस्यानुसमा[2]प्तिꣳ श्रुध्यवारवन्तीये समाप[3]द्येते ।
अतो यो द्रव्यविकारः स्तो[4]मैकारितः स भवति ॥ ९ ॥

अथ खल्वाह—"वसिष्ठस्य जनित्रे भवतः" इति । PB. 19. 3. 8; 21. 11. 3; LŚ. 9. 12. 8.
कस्येदं ब्राह्मणꣳ स्या[5]दिति ।
बृहद्रथन्तर[यो[6]र्विप्र]योगस्येत्याहुः, एते[7] हि विश्वोवसीयसी आजनित्रे भवत इति ।
अपि वा रथन्तरस्यैव द्वियोगस्यैतद्धि वासिष्ठमिति ।
अपि वा रथन्तर[8]स्यैव भवतश्च वासिष्ठस्य, ए[9]ते वासिष्ठे भवत इति ।
जनित्रे ए[10]वानुकल्पयेदिति कौत्स[11]ः ।
जनित्रे भवत इति सति किमन्यदनुकल्पनात् ।
न त्वेवानुकल्पयेत् ।
न ह्येते आनवकाश्यान्नुकल्पयतीति ।
एतेषा[12]मेव विचाराणामेकस्यैतद् ब्राह्मणꣳ स्यात् ।
ए[13]कस्तोमतामिवाह्ला[14]ं दिदर्शयिषन्नुत्तमे भागस्तोमान् करोति, एते प्रा[15]स्थि-स्थाना इति ।

पञ्चरात्रस्य चतूरात्रेणैव पृष्ठवादो व्याख्यातः ।
ते खलु स्वा[16]सु करोति ।
न ह्ययं चतुरो वीसं[17]नुपकृतः ।
अथापि नानाभागश्चतूरात्रः ।
अ[18]थेह समानभागे चतुर्थपञ्चम इति ।
कानि तन्त्राणीति ।
पञ्चा[19]हतन्[20]त्राणीति गौतमः ।
तच्चतूरात्रेणैव व्याख्यातम् ।
चत्वार्याहीनिकानि ।

1 ०वि० G1, G2, J, K. 2 ०मापत्ति० G1, G2, J, K. 3 ०पते B, G1. 4 स्तोभ० C; ०स्तोमविकारः K. 5 J omits स्यादिति … वा रथन्तर ( line 10 ). 6 योरविप्र is wanting in B. 7 ०तेके B. 8 ०स्य इवत० C; ०स्यये इवत० G1, G2, J; ०स्य चेहवत० K. 9 एके B. 10 वा० B. 11 ०त्सौ G1, G2, J. 12 ०र्षां त्वेव C, G1, G2, J, K. 13 एवस्तो० G1, G2. 14 ०वहां G1, G2, J. 15 प्रास० C, G1, G2, J, K. 16 यः सवनसाधु B. 17 ०नुकृतः C. 18 येह G1, G2, J, K. 19 ०त्रमाह० K. 20 G1, G2, J add तं after ०ह.

एकै[1]काहिकमिति धानञ्जय्यः ।
तत्तेनैव व्याख्यातम् ।
अग्निष्टोमः प्रथममहरुक्थानि मध्य[2]ः ।
दशरात्रन्यायेन यत्र संस्थाभि[3]प्रयुज्यते, पर्यो[4]भिप्रयुज्यते ।
उद्धरति षोडशिनं[5] चतुर्थात् ।
"विरा[6]जमन्वपाय स्वराजोपेयुः ।" Ārs. K. V. 112 b.
स्तो[7]मस्य वा लोपा[8]त् ।
अथाप्येनमतिरात्रे करिष्यन् भवति ।
तं[9]न्न सं[10]मविचारयिषीत् ।
उद्धरति आतीषादीयं धर्मिणि, तत् पुरा षडहे धर्मि भवति ।
तत्र याथान्तर्यात् कोशं प्रत्याहरति ।
अपि वा श्रुध्येन प्रच्युतमिहानुगृह्णाति ।
तदु भवत्यूर्ध्वेडं वार्हतेऽहनीति ।
स्तोमकारित आवापः ।
एतेनैवोत्तरो व्याख्यातः।
स्तोमकारित उद्धा[11]रः ।
सप्तदशस्तो[12]मं षोडशिनं[13] करोति ।
यो वा ह्यह्नः स्तोमः स षोडशिनो न्यायेन ।
यो वा[ हि[14] भक्तिरेवमुत्पन्नो हि भवति ।
अथाप्यनादिष्टव्यूहेन भवति ।
अथ कथमहीनाह्नो रात्रेरितीति । ]
ह्रसीयानित्यह्नैः[15] स्तोमं चैनं[16]मनुयन्तं पश्यामः ।
अथाप्याह—सप्तदशं स्तोमा नातियन्तीति[17] ।
व्रतात्तिमुत्तरं[18] उपक्रं[19]तः ।
स खल्वेकाह[20]क्लृप्तः ।
ते व्याख्याताः ॥ १० ॥

1 एवकामैका० G1, G2; एव कमैका० J, K. 2 मध्ये C, G1, G2, J, K, 3 ०स्थाहि प्र० B; ०स्थानि प्र० G1, G2, J, K. 4 एताहि प्र० B 5 ०नश्र० B. 6 विराजाम० C, G1, G2, J, K. 7 सोन० K. 8 लोभाव C, G1, G2, J. 9 तत्त G1, G2, J; wanting in K. 10 समवैवि० C, G1, G2, J, K 11 उच्चारः G1, G2; उत्र J. 12 ०शं C; स्तोमं is wanting in C, G1, G2, J, K. 13 ०शिकं B. 14 B omits हि ··· रात्रेरितीति ( line 21 ). 15 ०त्यहः C, G1, G2 J, K. 16 स्वे तम० C. 17 ०न्ती C, G1, G2, J. 18 ०रमुप० C 19 ०इत G1, G2, J, K. 20 खल्वेकाहा क्लृप्ताः C.

"क्रतुषडहे कथं रात्रिरिति ।" Ārs. K. V. 111 a.

अकर्त्तव्येति शौचिवृक्षिः ।

एवमुत्पन्नो हि भवति ।

अथाप्येनादिष्टा व्यूहेन भवति ।

अथापि कथमहीनाह्नो रात्रेरुपायो भविष्यतीति ।

अथापि कृत्स्नतायै वै नूनमिह रात्रिः क्रियेत, कृत्स्नोऽयं षडह इति ।

अथाप्येष चतुर्थो भागो रात्रेः प्रत्यर्द्धितामत्यक्रमिष्यदिति ।

"कर्तव्येति गौतमः ।" ibid.

आदिष्टा कल्पेन भवति ।

अथाप्येषाहीनसंस्था यां रात्रिस्तामवसानभूतां षष्ठमहरागच्छतीति ।

अथाप्येषोऽहीनन्यायः ।

सर्वेऽतिरात्रमन्तः ।

अथाप्यतिरात्रिकं व्रतम् ।

तस्यान्ते निपाताद् रात्रिमुपधीयमानां पश्यामः ।

यथा सप्तरात्रेषु ।

अथापि यः पृष्ठ्यावलम्बस्य पञ्चमादर्धदेशाद् रात्रिमपनयेत्, अर्थापायाद्राज्यपायाच्च स्तोमप्रत्यवरोहम्, इहापि सोऽर्थागमाद्रात्रिं प्रत्येतुमर्हतीति ।

यद्वेतदेवमुत्पन्न इति, अन्ततो वै[18] तत्र भवति, अन्तदर्शना रात्रिरिति ।

यद्वेतदनादिष्टा व्यूहेनेति, नित्यत्वान्नूनमेनानादिशतीति ।

यद्वेतत् कथमहीनाह्न इति, कथं वाऽप्यतिरात्रिकोऽभविष्यदिति, पश्यामश्चाहीनिकेभ्यस्तन्त्रेभ्यो रात्रेरुपायम्, यथा त्रिरात्रेषु ।

यद्वेतत् कृत्स्नोऽयं षडह इति, कृत्स्नो ह्येव षडहः रात्र्या तु कृत्स्नतरो भविष्यतीति ।

---

1 ०प्यन्वादि० B, ०प्यानादि० G1, G2, J. 2 व्यूहेनरार्थान् B. 3 ०नानह्नो० B. 4 ०योऽभविष्यदिति C. 5 रात्रेः ( रात्रिः G1, G2, J ) कृत्स्ने तद् कृत्स्नोऽयं षडह इति अथाप्येष चतुर्थो भागो रात्रेः प्र० C, G1, G2, J. 6 ०लम्बता० B. 7 ०ने ष० G1, G2, J. 8 यद् C, G1, G2, J, K. 9 स्तोमवसानगतां B. 10 सर्वे वै रात्रिनतः C; सर्वे वै रात्रियतः G1, G2; सर्वे वै रात्रियता J; सर्वे वै रात्रि० K. 11 ०प्य( प्या J )रात्रिकं C, G1, G2, J, K. 12 ०लम्बनस्य C. 13 ०नादनादि० C, G1, G2, J, K. 14 ०मुर० C. 15 ०रोहः C. 16 अपि C. 17 अनन्ते C, G1, G2, J, K. 18 Wanting in G1, G2. 19 ०ष्टव्यू० C, G1, G2, J. 20 ०निकत्वस्तन्त्रे० G1, G2, J, K 21 दैव G1, G2, J, K. 22 ०गारा G1, G2, J, K.

यद्वतं[1]क्रमिष्यदिति, अग्रं[2] एवातिक्रान्तो भवति ।
अति[3]क्रामन्तं च पश्यामः ।
यथाप्तोर्यामे गौरीवितापायात् पृथक्[4] स्वाराणि[5] [ स्तोत्राणि ][6] करोति नानासाधुरँ[7]हीन इति ।
स यदेतान्येतानि रूपसम्पन्नानीति ॥ ११ ॥

आयुष्कामँ[8]यज्ञ उत्तरः ।
तत्र त्र्यहौ समस्य निँ[9]दधातीति ।
अहीनत्र्यहं चैकाहत्र्यहं च ।
कस्य हेतोरिति ।
"त्रयः प्राणापानव्यानाः" इति । PB. 22. 2. 3.
अग्निष्टोमसंस्थं ज्योतिषम् ।
एषास्य प्राकृती संस्था ।
अथाप्येतया संस्थया चरति ।
अथापि नानात्वमाचिमौ त्र्यहौ, तावुँ[10]पक्रमसंस्थया प्राचिकमिषीत्[11] ।
अषोडशिका रात्रिः स्तोमज्ञात्रेण, अषोडशिको ह्येवायुर्भवतीति ।
द्वितीयस्याह्नो [ वासिष्ठं[12] माध्यन्दिनान्त्यं स्यादिति शाण्डिल्यः ।
पष्ठार्थेनेदं पुरा प्रच्यवते नेह पष्ठार्थ इति ।
पार्थमेवेति गौतमः ।
एतत् समूहसाम, समूढावच्छेदोऽयं भवतीति ।
तृतीयस्यानुष्टुभि ] बृहत् करोति ।
त्र्यहे सर्वे[13] बृहद्रथन्तरे युयुक्षमाणः ।
अजाम्यर्थं चैवँ[14] स्यात् ।
पृष्ठ्यावलम्ब उत्तरः ।
तस्य पञ्चाहो बृहद्रथन्तरपृष्ठ एव ।
विश्वजिति हि पृष्ठानि करिष्यन् भवति ।
उद्धरति षोडशिनं चतुर्थात् ।
तत् पञ्चरात्रेणैव व्याख्यातम् ।
त्रयस्त्रिंशानि पञ्चमस्याह्न उक्थानि ।

---

1 ॰द्वत्यकं॰ G1, G2, K. 2 ॰अह G1, G2, J, K. 3 अभिक्रा॰ B, C. 4 पृष्ठस्ता॰ K. 5 ॰राक् G1, G2, J. 6 B, K omit it. 7 ॰धुरहित G1, G2, J. 8 ॰कामाना B. 9 G1, G2, J, K have निति for निदधाति ··· इति ( line 7 ). 10 तावुप॰ C, G1, G2, J, K. 11 ॰मयि॰ B; ॰क्रमेयपीत्॰ G1, G2, J, K. 12 वासिष्ठं ··· ॰नुष्टुभि (line 20) wanting in B. 13 सर्वं C, G1, G2, J, K. 14 चैव C.

रात्रिकारितो हि स्तोमप्रत्यवरोहः ।
तान् विश्वजिति करिष्यन् भवति भवति ॥ १२ ॥

च[1]तुर्थः पटलः

अथातः सप्तरात्राः ।
तत्र पृष्ठ्यं व्रतं सप्तमं करोति[2] ।
ए[3]तदकृ[4]तं पृष्ठं भवति ।
अथा[5]प्यनङ्गमेतद् व्रतस्य[6] यदुक्थानि ।
तत्र ज्यौ[7]तिष्टोमानि स्वस्तोमान्याहरति, षोडशिमती[8] रात्रिरहीनन्यायेन ।
अथाप्यनङ्[9]गमेतद् व्रतस्य यद्रात्रिः ।
तत्र यैवं[10] कृत्स्नतमा रात्रिस्तो[11]माहरतीति ।
सप्तदशमुत्तरस्य [ व्र[12]तम् ।
स्तोमकारित उद्धारः ।
तस्य स्तोमान्वयीत्युक्थानीति ।
किंस्तोमानि स्युरिति ।
एकविंशस्तोमानीति गौतमः ।
एषं[13] एषां प्रकृतिस्तोमो[14] भवति, तमन्वियुरित्येतत्स्या[15]त् ।
सप्तदशस्तोमानीति धानञ्जय्यः ।
एषोऽस्य[16] व्रतस्य स्तोमो भवति, तमन्वियुरित्येतत्स्यात् ।
पञ्चविंशस्तोमानीति ] शौचिवृक्षिः ।[17]
एष व्रतस्य प्रकृतिस्तोमो भवति, तमन्वियुरित्येतत् स्यात् ।
अथाप्येवं तासां स्तोत्रीयाणामनुग्रहो भवति यो[18]ः पञ्चविंशाद् व्रतात् सप्तदशे क्रियमाणेऽपयन्ति ।
द्वे[19] पक्षस्तोत्रीये नानुगृह्येते ।
[ते[20]] चेदनुजिघृक्षेत् त्रिणवं प्रथममुक्थं कुर्यात् ।
एकविंशं स्तो[21]मं षोडशिनं करोति ।
एषोऽस्य प्रकृतिस्तोमो भवति ।
अथाप्येवं तासां स्तोत्रीयाणामनुग्रहो भवति यथैतच्छौचिवृ[22]क्षिरिति ।

1 in B only. 2 B adds इति. 3 तद० G1, G2. 4 ०कृष्टं K. 5 अनङ्ग० G1, G2, J, K. 6 B adds यद् व्रतस्य. 7 ज्यौतिष्टोमानः B 8 ०मति० B. 9 ०प्यभङ्ग० G1, G2. 10 ०येन G1, G2, J. 11 ०स्तमो ह० C; ०तमोह० G1, G2, J, K. 12 B has व्रतस्तोमान्वयानीति for व्रतम् । स्तोमा०…०स्तोमानीति (line 19). 13 Wanting in G1, J. 14 G1, G2, J add न. 15 G1, G2, J omit स्यात्. 16 ०ऽस्य G1, G2, J, K. 17 Wanting in G1, G2, J, K. 18 यः B. 19 द्विपक्ष० C, G1, G2, J, K. 20 Wanting in B, G1, G2, K. 21 ०शं षो० C, G1, G2, J, K. 22 ०क्षे० B.

छन्दोमपवमानमुत्तरस्य व्रतम् ।
स्तोमकारित आवापः ।
अथ खल्वत्र विधर्माकरिष्यन् स्तोमशास्त्रेण कस्माद् धर्म करोतीति ।
द्वन्द्वयोः साम्नोर्यथान्तर्यात् पूर्वमादत्ते ।
अथाप्येतस्याविकृतं निधनं भवति ।
अविकारः पूर्वो[3] विकारादित्येके ।
एकविꣳशान्युक्थानि ।
एकविꣳशस्तोमꣳ षोडशिनं करोति ।
तद् व्याख्यातम् ।
प्रथमे सप्तरात्रेऽभ्यास उक्तः ।
उत्तरस्य पञ्चाहो बृहद्रथन्तरपृष्ठः ।
चतुर्थस्याह्न एकविꣳशः षोडशी ।
"पञ्चमस्याह्नः पार्थस्य लोक आकूपारम्" वात्रेयं वेति विचारयन्ति ।
Ārṣ. K. VII 12 b.
नानापुरुषकल्पौ स्यातामिति ह स्माह धानञ्जय्यः ।
अन्य एवाकूपारमरोचयिष्यत, अन्य आत्रेयम् ।
आत्रेयं चैवाभिरूपतरं पञ्चमेऽहनि स्थानसम्मितम्, पञ्चमस्थाना अत्रय इति ।
चतुर्थस्याह्नः शुद्धाशुद्धीयस्य लोक आकूपारम् ।
पञ्चमस्याह्नः पार्थस्यात्रेयम् ।
पार्थं चैव नित्यम् ।
अह्नः पार्थं व्याख्यातम् ।
आत्रेयं नु खलु कुर्वत उभयोरनुग्रहो भवति ।
व्रते हि पार्थं करिष्यन् भवति ।
चतुर्विꣳशं बहिष्पवमानꣳ सप्तदशस्तोमं व्रतं करोति ।
तत्र त एवोक्थानाꣳ स्तोमविचारा यत् सप्तदशे व्रते ॥ १३ ॥

---

1 °दात्त G1, G2, J, K. 2 वि° G1, G2, J, K. 3 °र्वोऽवि° C. 4 °दिति C, G1, G2, J, K. 5 एवन्यकू° B; वाकू° G1, G2. 6 °रंरो° B; °रमिरो° C; °रमराच° G1, G2, J. 7 °ने स° K. 8 आत्रेनमा° G1, G2, J; आत्रेयमा° K. 9 दं B; यान् K.

# अथ नवमः प्रपाठकः

अथ[1] प्रतिष्ठाकामयज्ञ उत्तरः।
स खल्वेकाह[2]क्लृप्तः।
ते व्याख्याताः।
जनक[4]सप्तरात्रे चत्वार्यहीनिकानि।
अहानि आहीनिकतन्त्राण्यनन्तत्वात्।
उद्धरति षोडशिनं चतुर्थात्।
[तद्[5]] व्याख्यातम्।
*व्याख्याता अर्काः।*
तेषां तदे[6]वानुपूर्व्यं यत् त्रिरात्रे।
'धर्ता दिवः' इति SV. 1. 558; 2. 578; RV. 9. 76. 1; PB. 14.9.4.
उत्तम एतासु स्वयोनिः।
द्वितीयस्याह्नः सौभरम्, उक्थानां ब्रह्मसाम कुर्यादिति धानञ्जय्यः। cp. PB. 8. 8. 11.
त्रैककुभं हि चतुर्थं करिष्यन् भवति।
औ[7]पगवमेवेति गौतमः।
*अतिरात्रे सौभरं करिष्यन् भवति।*
एवमुभयोरनुग्रह इति।
षोडशिमती[8] रात्रिरहीनन्यायेन।
अत्रैव चतुष्टोमः षोडशिमानिति शौचिवृक्षिः।
शाम्बूपुत्रो नात्र च, नेति राणायणीपुत्रः।

---

1 in C only. 2 Wanting in C, G1, G2, J, K. 3 ०काहः C. 4 ०कारसप्त० G1, G2, K; ०का सप्त० J. 5 Wanting in B. 6 तदीयानु० B. 7 ०रवगव० G1, G2, J. 8 ०मति B.

पृष्ठ्यः स्तोम उत्तरस्य ।
षडहो बृहद्रथन्तरपृष्ठ्य एव ।
विश्वजिति हि पृष्ठ्यानि करिष्यन् भवति ।
चतुर्थस्याह्नः ।
'प्रत्यस्मै पिपीषते' इति SV. 1. 352; 2. 790; RV. 6. 42. 1.
गौरीवितं षोडशिसाम ।
विराजमन्वपाय स्वराजोपेयुः ।
पृष्ठापायाद्रेवत्योऽपयन्ति ।
तत्रैतद् दार्ढच्युतमेतद् गायत्रीसामेह्कारवत् पर्णिधनम् ।
यथा रेवत्यः ।
विपरिहरेदौदणो रभ्भ इति गौतमः ।
एवमिडारम्भणा बृहतीति ।
न विपरिहरेदिति धानञ्जय्यः ।
अपि ह्येवमजामि ।
स किमर्थो नित्यं कल्पं व्यावयेदिति ।
अप्तोर्यामन्यायेन स्यात्, षोडशिका रात्रिश्चातुष्टोमन्यायेन ।
अथापि कृतः षडहे षोडशीति ।
आयुष्कामयज्ञ उत्तरः ।
"स यन्नवरात्रो नव प्राणाः" इति । cp. PB. 22. 12. 4.
त्रिकद्रुकानुपदधाति छन्दोमसादृश्यात् ।
अथाप्येत ऊनस्य पूरयितारः ।
षोडशिका रात्रिः[13] स्तोमज्ञात्रेण, आषोडशिको ह्येवायुर्भवतीति ।
पशुकामयज्ञ उत्तरः ।
तत्र पञ्चाहं करोति ।
"पाङ्क्ताः पशवः" इति । PB. 22. 13. 3.
यदु विश्वजितं पाङ्क्तानि पृष्ठानीति ।
त्रिकद्रुकानुपदधाति छन्दोमसादृश्यात् ।
अथाप्येत ऊनस्य पूरयितारः ।
तान् पुरस्तात् पञ्चाहस्य करोति ।

1 ०पृष्ठ C, G1, G2. J, K 2 पृष्ठानि C, G1, G2, J, K. 3 ०जाम० C, G1, G2, J, K. 4 व is wanting in C. 5 षष्ठिधनं G1, G2, J, K. 6 अपि ए० B. 7 ०म्मयोः C, K; ०म्भयो G1, G2, J. 8 ०र्थे B. 9 ०त्यय G1, G2, J; ०त्य K. 10 ०रात्रस्यापो० C, G1, G2, J; ०रात्रास्यापो० K. 11 ०श्चतु० B. 12 पूरिता० G1, G2, J, K. 13 ०रात्रस्तो० B. 14 पङ्क्तानि C, G1, G2, J, K.

विश्वजितं हि रात्र्युपायं[1] करिष्यन् भवति ।
आयुषोऽनुष्टुभि बृहत् करोति ।
त्र्यहे सं[2]मं बृहद्रथन्तरे युयुक्षमाणः ।
अजामयर्थं चैव[3] स्याद् वार्कजम्भं वेति विचारयति ।
अथापि नैतां स्वतन्त्रां स्तोमविधां बृहदापद्यते ।
तत्राकूपारं तृचसमाप्तये ।
तदेतन्न[4]वमाद् भागान्वितम् ॥ १ ॥
अथैष दशरात्रैः[5] बृहद्रथन्तरपृष्ठ एव ।
तत्र खलु विश्वजितं दशमं करोति ।
स खलु विश्वजित् क्रियमाणो दशमतन्त्रं प्रत्यूहति ।
तत् प्रत्यूह्यमानं पूर्वे तन्त्रे प्रत्यूहति ।
अत्र यदेवैकं पुरा सप्तमे कृत[6]तन्त्रं भवति तत् प्रच्यवते ।
अथैते षष्ठ[7]नवमयोस्तन्त्रं व्यत्यस्यति ।
षोडशाहिकै[8]रयं स्तोमैरभिविधीयते ।
स त्रयस्त्रिंशं स्वतन्त्रम[9]चिकीर्षीत् ।
तस्येतरस्थानं परीतं भवति ।
अत्र खल्वयं सर्वो दशरात्रो नानातन्त्रो भवति ।
समूहति[10] बार्हद्रथन्तरपृष्ठान् नित्याभिः ।
अनित्यो[11] ह मात्रायामकरिष्यत्, अनित्यो ह्ययं दशरात्र इति ।
नित्या[12]स्तु चतुर्थपञ्चमयोर्जगत्योः ।
याश्चतुर्थे नित्याः सप्तमेऽहनि ताः करिष्यन् भवति ।
अतो नित्याः करोति ।
तद्वशेन पञ्चमे कुशलं यद[13]नित्याः ।
त्रिष्टुभो[14] नित्याः ।
नित्यौ[15] एवाचिकीर्षीदित्यपरम् ।
नित्ये[16] तन्त्रेऽनित्यौ स्तोमौ ।
तत्र नित्यानित्यौ[17] अभिरूपौ[18] ।

1 ०पायाय C, G1, G2, J, K 2 सामं B. 3 वैत G1, G2, J, K. 4 ०न्नभवमाद् G1, G2, J. 5 ०रात्रे G1, G2, J. 6 कृतं तन्त्रं C, G1, G2, J. 7 पृष्ठ० B, G1, G2, J, K. 8 षाडहिकै० B; षोडशाहिक० G1, G2, J. 9 ०त्रे G1, G2, J. 10 B adds नित्यान्. 11 ०त्ये B. 12 ०स्तु C, G1, G2, J, K. 13 यो नि० B; यनि० G1, G2, J, K. 14 Wanting in G1, G2, J, K. 15 ०त्याभि G1, G2, J. 16 C, G1, G2, J, K add ह. 17 ०त्याभि० G1, G2, J, K. 18 ०पौ B.

यदु षष्ठी उभयोरनित्या ।
उभयꣳ ह्येव तत्रानित्यꣳ स्तोमश्चैव तन्त्रं च ।
नित्यास्तु परयोरह्नः ।
नित्याभिर्हीनस्य द्र्यहस्य समूहः ।
नित्यास्तु नवमे ।
अन्तर्विधा हि दाशमिकयः ।
विश्वजित्यन्तर्विधाः करिष्यन् भवति ।
तत्र कुशलं यज्ज्योतिष्टोम्यं करोति ।
तन्त्रान्विते च पृष्ठान्विते च ।
अथ खलु दीर्घतमसोऽर्कमष्टमेऽहनि करिष्यन् भवति ।
अन्तसामान्त इति ।
तन्त्रस्थः स्वाशिरामर्कः ।
सप्तमे त्रय एव, एकोऽग्नेरर्कस्तन्त्रापेतः ।
तन्नवमेमहर्भवति ॥ २ ॥

अथ द्रव्यसमुद्देशः ।
यानि यथास्थानं व्याख्यातानि [ तानि ] यान्ययथास्थानं तैरेवाष्टभिः पर्यायैस्तेषामन्वयꣳ समन्वीक्षेत ।
नाना ब्रह्मसामानि नानात्वार्थः ।
श्यैतनौधसवर्णानि बार्हद्रथन्तरपृष्ठ्यान् नानाग्निष्टोमसामानि नानात्वार्थः ।
पेडानि भूयिष्ठानि करोति ।
सामान्तस्य स्थानेऽन्तसामान्तम् ।
अथाप्येष तृतीयसवनसामान्तः ।
तमदिदर्शयिषीर्न्नेनाच्छन्दसि ।
एवंभूयो नानात्वमिति ।
तानीमानि सप्त छन्दाꣳसि नवाह्नं नानुभवन्ति ।
तत्र ककुभं च विराजं चोपप्रयुङ्क्ते ।
सा प्रायात् तानि कुशलं यद्रोहेण प्रयुङ्क्ते ।

1 पृष्ठ C, षष्ठ G1, G2, — J. 2 ०यीर C, K; ०यरनि० G1, G2, J. 3 सोम० G1, G2, J. 4 द्यहस्य C, J, K; त्र्यह G1, G2. 5 B repeats it. 6 नित्योऽस्तु C, G1, G2, J. 7 ०वि० B, G1, G2, J, K. 8 ०ष्टोम्यौ C, G1, G2, J, K. 9 स्व० C. 10 ०न्त्रयैतः G1, G2, J. 11 ०ममहर्इति C; ०ममईति G1, G2, J 12 Wanting in B. 13 स्थानं तस्सा० C; स्थाने तं सा० G1, G2. 14 ०दिष्यत्रा० B 15 ०ऐदं भू० B; ०स्तेवं भू० G1, G2, J, K. 16 C adds भवन्ति. 17 नव्याहत्रा-कृयानि । B; वाहता नु भवन्ति G1, G2, J, K 18 मत G1; तत G2.

'अग्न आयूंषि पवसे' इति SV. 2. 814, 868; RV. 9. 66. 19; PB. 6. 10. 1; 9. 8. 12.

प्रथमेऽहनि करोति ।

कस्य हेतोरिति ।

शुशुंत्सघज्ञोऽयं भवति ।

सैषाग्नेयी पवित्राभिव्याहारा शुद्ध्यर्थेऽभिरूपा ।

[अथापि शश्वदिहाग्निष्टुतं तैत्तिरीया अधीयते ।

सैषाग्निष्टुदनुग्रहाय स्यात् ।

स्वादिष्ठामार्भवीयाम्, एषा स्वादुमती पवित्राभिव्याहारा शुद्ध्यर्थेऽभिरूपा । ]

अथाप्यैकाहिकी भवति ।

अथ खल्वत्र पौष्कलं भवति ।

शुर्द्धस्यैतद् भवति यत् पुष्कलमिति ।

अथाप्यैकाहिकमेकाहसमासं शश्वदिह तैत्तिरीया अधीयते ।

नाना मध्ये निधनानि न दाशरात्रिकाणि ।

मध्ये निधनान्यनु भवन्ति ।

अंतश्छन्दस्यान्युपप्रयुङ्क्ते ।

'आ सोम स्वानो अद्रिभिः' इति SV. 1. 513; 2. 1039; RV. 9. 107. 10.

तृतीयस्य बृहती सप्तदश साध्यासां करिष्यन् भवति ।

अत एतां करोति ।

एषां सामन्या तृचप्रथमा तृतीयस्थानेति ।

'बभ्रवे नु स्वतवसे' इति । SV. 2. 794; RV. 9. 11. 4.

षड्टचं षष्ठसप्तमयोर्विहरति ।

सन्तानार्था नवर्चम् ।

एतस्य प्रथमेऽहनि तृचं कृतम् ]

'उपास्मै गायता नरः' इति । SV. 2. 1. 113; RV. 9. 11. 1; PB. 6. 9. 1; 16. 11. 2.

---

1 शिशुः सद्योशोऽयं C; शिशुत्सघोशायं G1, G2, J; शिशुत्स० K. 2 B omits अथापि ··· भिरूपा (line 10). 3 पठिता० C. 4 शुद्ध्य० C, G1, G2, J, K. 5 ०तीयका B. 6 मध्ये-C. 7 मध्ये-C. 8 अछन्द० G1, G2; अंतछन्द० J; अवछन्द० K. 9 पप्रयुङ्क्ते ··· कृतम् (line 26) is wanting in B. 10 एतां G1, G2, J, K. 11 ०मान्या G1, G2, J, K. 12 मे स्था० G1, G2, J, K.

व्रत्ये[1] सप्तमस्य समूढाज्यम् ।

एतत् स्थानं[2]सम्मितम् ।

छन्दस्ये उत्तरयोः ।

एते रूपसम्पन्ने इत्येते रूपसम्पन्ने इति ॥ ३ ॥

पञ्चमः[3] पटलः

अथैव कुसुरुविन्दः ।

तत्र खलु बृहद्रथन्तरे[4] करोति ।

राथन्तरवार्हतौ[5] ह्येते[6] स्तोमा इति ।

कानि तन्त्राणीति ।

दशरात्रस्तोमविकृत इत्येके ।

द्वैपृष्ठ्याद् द्वे तन्त्रे स्यातामित्याचार्याः ।

प्रथमद्वितीययोरिति शौचिवृक्षिः ।

एते[7] आहीनिक इति ।

तद्विदं प्रथमतन्त्रं प्रवतीभिः[8] क्लृप्तमपरूपम् ।

अन्यत्रोपक्रमाद् व्यत्यसिष्य[9]स्तु भवति ।

तस्य स्थाने ज्यो[10]तिष्टोमं करोति—प्रथमस्य प्रथम[9] राथन्तरस्य राथन्तरमिति ।

एकाहि[11]के इति धानञ्जय्यः ।

एवमेप[12]र्वविलोप इति ।

तद्विदं[13] गोस्तन्त्रमन्तविधा[14]भिः क्लृप्तमपरूपम् ।

अन्यत्रान्ताद्व्यत्यसिष्य[15]स्तु भवति ।

तस्य[16] स्थाने द्वितीयतन्त्रं करोति—

द्वितीयस्य द्वितीयं बार्हतस्य बार्हतमिति ।

स खलु दशमेऽहनि द्वितीयतन्त्रमुद्धृत्य तस्य स्थाने ज्योतिष्टोमं[17] करोति, एकाहतन्त्राद्रात्रिमुपजिगमिषन् ।

उक्तो[18] द्रव्यागमः ।

समेषु स्तोमेषूभयोस्तन्त्रयोः पुनानां बृहतीं करोति ।

उभयोर्ह्येषां[19] [20]नित्येति ।

1 व्रत॰ G1, G2, J, K. 2 ०नं स० G2, G2, J, K. 3 In B only. 4 C adds वै. 5 ०तानि० B. 6 ०ष्टया B, K; ०ष्ठवे G1. 7 अते C. 8 G1 omits प्रवतीभिः ··· गोस्तन्त्रं (line 20). 9 ०नुरू० K. 10 ज्यो० C, G2, J, K. 11 एको हि B. 12 एवं प० B. 13 तन्विदं C. 14 ०विदधाभिः G1, G2. 15 ०शिष्य॰ C. 16 तद् B. 17 ०मा G1, G2, J. 18 उक्तौ G1, G2, J. 19 ०षां B, G1, G2, J. ०ता K. 20 इति B.

उष्णिक्ककुभौ वा ।
अपि समाने भवत इत्यपरम् ।
द्विरात्रन्याय इवेह भवति[1] ।
द्वैतन्त्रेण द्वैपृ[2]ष्ठ्येन ।
तत्र द्वैरात्रि[3]कंय उष्णिक्ककुभः करोति ।
अथ यत्र राथन्तरस्यार्द्धस्यचार्थो भवति, तद्यथोदश्चतुर्वीरे व्याख्यातं तथा तत्र भवति ।
बार्हतेष्वहस्सु यौक्ताश्वद्याविष्मते, अग्निष्टोमेषु द्वाविष्मर्तमौक्ष उक्थ्येषु मौक्षमुक्थसामेति ।
विभक्तान्युक्थानि ।
राथन्तराणि राथन्तरेषु ।
बार्हतानि बार्हतेषु ।
तदेवार्क्षाणां स्थानं यद्दशरात्रे तयोः सत्रगतयोर्बार्हतस्य कविमन्तं पर्यासं करोति ।
कालेयमच्छावाकसाम ।
"अभिप्लवन्यायेनैकविंशोऽतिरात्रः ।" cp. PB. 22. 15. 5.
"य एकस्तोमानामुत्तमस्तस्य स्तोमान्वयी षोडशीत्यविचारमेकविंशः" ॥४॥ Āp. Ś. 22. 24. 7; Ārṣ. K. VIII. 9. K; cp. PB. 22. 15. 9.
अथैष छन्दोमवान् बृहद्रथन्तरपृष्ठ एव ।
तत्र खलु विश्वजितं दशमं करोति ।
स खलु विश्वजित् क्रियमाणश्छन्दोमान् प्रत्यूहति ।
ते प्रत्यूह्यमानाः षष्ठमहः प्रच्यावयन्ति ।
"पृष्ठ्यावलम्बस्य पञ्चाहः प्रथमस्याह्नः प्रज्ञवद् बहिष्पवमानं पञ्चमस्याह्नः" । Ārṣ. K. VIII. 10 a.
" 'असृग्रन्तं प्र वाजिनः' इति SV. 1. 482; 2. 384; RV. 9. 64. 4; cp. LŚ. 4. 8. 12.
अनुरूपः" इति शाण्डिल्यायनः । PB. 13. 7. 5.
उपरिष्टादिमं नवर्चमावर्तयिष्यन् भवति ।
कथमकृतस्यावर्तनं स्यादिति ।

---

1 G1, G2 omit ति ''' तथ ( line 6 ). 2 वै पृ० B. 3 ०त्रिकं C, J, K.
4 ०स्यान्यास्तुचार्थो B. 5 तद्यथा ,० K. 6 ०मता० J. 7 ०रात्रि C, G1, G2, J, K.
8 ०तमस्य J. 9 ०यमच्छा० B. 10 ०या G1, G2, J. 11 तं is wanting in K.

नवाह्योगा इमा भवन्तीति धानञ्जय्यः ।
कथमसमापयिष्यन्नवाहं नवाह्योगाः कुर्यादिति ।
व्याख्यातः समूहः ।
'ऋतावानं वैश्वानरम्' इति SV. 2. 1058.
होतुराज्यम् ।
वैश्वानरीयस्य स्थाने वैश्वानरीयं ।
त्रैककुभे उत्तरयोः ।
एते रूपसम्पन्ने इति ।
उद्धरति कण्वरथन्तरम्, अजामि हि भवति ।
तत्रैतत् सोमसाम ।
एवमिडारम्भणा बृहतीति ।
गौरीवितापायात् पृथक् स्वाराणि करोति नानासाधुरह्णीन इति ।
स यदेतान्येतानि रूपसम्पन्नानीति ।
प्रथममात्रेयं नमंसोपहत्यैतदु बृहद्वयोनि वाह्नतेऽहनीति ।
स्थानसम्मिते उत्तरे इति ।
एते रूपसम्पन्ने इति ।
स्वाराणि त्रैककुभानि माध्यन्दिनान्यान्येतानि रूपसम्पन्नानीति ।
ऐडानि जागतान्यार्भवान्यानि ।
इडाभक्रयो हि छन्दोमा इति ।
स यदेतान्येतानि राथन्तरैवाह्नतेडानीति ।
नवमेऽहनि दीर्घतमसोऽर्कमनुकल्पयन्त्येके ।
अहर्ग्रात्रेण स यदनुष्टुभि ।
एतदस्य समृद्धं वा न भवति ।
तेन्त्राकूपारं तृचसमाप्तये ।
अथ येनानुकल्पयन्ति बृहत्यां यानुक्तं मन्यमानाः ।
यथा वैतद्दग्नेरर्कः ।

1 नवाह्योग ... कुर्यादिति is wanting in G1, G2, तत्वाह्योगा J, K. 2 ०रीयम् C, J, K; ०रीय G1, G2. 3 काण्व० C, G1, G2. 4 हि C, G1, G2, J, K. 5 ०म्भणा संभरराया बृ० G1, G2, ०म्भराय संभरराया बृ० J, ०म्भणा समरंण्या बृ० K. 6 ०मारात्रेयं B. 7 तमह्रोप तत्र B. 8 त्रैङ्कुभानि C, G1, G2, J, K. 9 ०तांन्यार्भवनि G1, G2, J; ०तांन्यार्भवंति K. 10 ०डामक० C. 11 ०योभि B. 12 ०रे वा० B. 13 स्थानं for वा न in K. 14 तत्राकू० C; तत्रकू० G1, G2, J. 15 बृ० C. 16 यासानु० B. 17 ०ग्नेऽर्कः C, G1, G2, J.

'सप्तमेऽहनि कृताकृत इति समापद्यंते' । Dh. Dr. Ś. 9. 3. 4.

दशमेऽहनि सामानि समूह्ंह्वार्जैजिद् द्विपदास्वनुगृह्णाति संयुकमेनेनाह्ना भवतीति ॥ ५ ॥

कथं दशमधर्माः, मानसमिति
कर्तव्या इत्येके ।
तद् वोंह्वर्ज्ञायत इति ।
अकर्तव्या इत्यपरम् ।
ऋँचसमास्तथैवैनांनुकल्पयन्ति ।
वृह्त्यां वानुकृतं मन्यमानान् दशमं च ।
लुब्धश्चं दशरात्र इति ।
अथास्य कृतेन विश्वजिता मानसमध्यशाययिष्यत् ।
अथाप्यनुष्टुप्संयोजनास्ते ।
जाँगतमिदंं स्थानं भवति ।
अथापि सत्रोत्पादास्ते ।
अहीनोऽयं भवतीति ।

"अभिचर्यमाण यज्ञ उत्तरः ।" cp. PB. 22. 17. 3; Āp. Ś. 22. 24.1.

स खेल्वेकाहक्कृतः ।
ते व्याख्यानाः ।
तस्य सर्वेनभाजैः स्तोमाः सेंवनवद्भाजो वेति विचारयन्ति ।
एवंं सवनेंस्तोमाः सेंम्प्रयुक्ता भविष्यन्तीति ।

"उक्थ्यंस ंस्थं ज्योतिषं बृहत्पृष्ठं वार्हतं तन्त्रंम् ।" cp. Ārṣ K. V. 124a.

द्वितीयंं हि स्थानमापन्नमिति ।
तेंत्र यो द्रव्यविकार उक्थ्यत्वाच्च वृहत्पृष्ठत्वाच्च सें भवति ।
अपि च समन्तंं समन्तीकाराय ।

---

1 समानपद्ये C, K; सम्पपद्यन्ते G1, G2, J. 2 ॰ह्रा॰ B. 3 ॰जह B; ॰र्जिG1, G2, J. 4 ब्यह्जो॰ B; व्यंह्ना॰ G1, G2, J, K. 5 ॰न C, G1, G2, J, K. 6 ऋच ··· ॰मानान् is wanting in C, G1, G2, J, K. 7 ॰नानु॰ is suggested 8 दच द is wanting in B. 9 ॰ध्दक्॰ C, G1, G2, J, K. 10 जागत is wanting in J. 11 खल्वै॰ C, C1, G2, J. 12 सव॰ B. 13 ॰वस्तो॰ B, C, J, K. 14 सा(स C)नावद्॰ B, C, G2, J; सनाः सनावद्॰ G1. 15 ॰नाः स्तो॰ G1, G2, K. 16 सनं प्र॰ C, G1, G2, J, K. 17 उक्थ्यंंस्था B. 18 तत्र B. 19 तत्र G1; तत्रं G2, J. 20 Wanting in G1, G2, J, K.

अथा[1]त एकादशरात्रः।
दशरात्रान्ता अहीनाः।
द्वादशाहप्रभृतीनि सत्राणि।
किमेकं स्थानमन्तरीय[2]मिति वा।
एकादशरात्रं करोति।
"पृष्ठ्यावलम्बस्य पञ्चाहः, पृष्ठ्यस्तोमस्य पै[3]ष्ठमहः" इति। Ārṣ. K. VIII. 11. H.
पयसा पैं[4]ष्ठमहरभ्या[5]सं धृतिस्वरा[6]दुक्तं पयोधा।
अन्येवं द्वे बृहत्यौ[7] स्वरा[8]वुक्तौ बृहतीति[9]।
"पुनः कण्वरथन्तरे स्वं[10] लोकमेति[11]।" Ārṣ. K. VIII. 11. H.
अजाम्यर्थं व्याख्याताः छन्दोमाः।
दशमस्य स्थाने चतुष्टोमं करोति।
कस्य हेतोरिति।
छन्दोमस्य छन्दो[12]ममेत्यग्निष्टोमस्यात्यग्निष्टोमं स[13] रथन्तरपृष्ठो ज्योतिष्टोमतन्त्रो यथा दशममहरिति ॥ ६ ॥
[14]अथ दशमयज्ञम्, मानसमिति।
अकर्तव्या इत्येके।
स्वेन[15] नामधेयेनैकाह आ[16]दिश्यते।
"चतुष्टोमोऽग्निष्टोमः" इति। ĀP.Ś. 22. 24. 11.
अथापि न दाशमिकं लिङ्गं दृश्यते।
यथैतद् बहिष्पवमानस्यावृत्तिः साम्नां विप्रच्या[17]वैनमनुष्टुभः परोद्दीचिकीर्षेति।
कर्तव्या इत्याचार्यः।
येऽन्ये मानससंयु[18]क्ताः संस्थाप[19]नीयं तं[20]मानसं "चतुष्टोमोऽग्निष्टोमः" इति। ibid.

1 अथ ते G1, G2, J, K. 2 ॰रि॰ B; ॰रीया॰ K. 3 G1 adds षष्ठमस्य. 4 पृष्ठ॰ G1, G2, J, K. 5 ॰भ्या राजति स्व॰ C, ॰भ्यास जनिस्व॰ G1, G2, J, K. 6 स्वराड्डुक्तं B, K; स्व × × क्तं Cक; स्वरांदुक्तं Cख, G1, G2, J. 7 बृहद्वत् B. 8 स्वरासुक्ता B; स्वराड्डुक्ता G1, G2, J, K. 9 ति is wanting in Cक. 10 स्वलो॰ G1, G2, J. 11 ॰मिति C. 12 ॰ममत्य॰ B, मत्य॰ for छन्दोममेत्य॰ in G1. G2, J, K. 13 स उच्छन्दो रथ॰ C, G1, G2, J, K. 14 कथं दशमधर्मा मानसच्छन्दोमस्य छन्दोमवत्यग्निष्टोमस्यात्यग्निष्टोमं स उत्तररथन्तरपृष्ठो ज्योतिष्टोमः कथं दशमधर्मा मान॰ C, G1, G2, J, K. 15 स्तेन G1, G2, J, K. 16 आशि॰ C, G1, G2, J. 17 विप्रस्यावनम॰ G1, G2, विप्रस्यावनम॰ J, K. 18 ॰युक्तेभ्यः C, G1, G2, J, K. 19 ॰नी B. 20 तन् is wanting in C, G1, G2, J, K.

अथाप्यक्तेन विश्वजिता मानसमभ्यशाययिष्यत् ।
अथापि सत्रोत्पादं नाहीनकृतावचिकीर्षीत् ।
दृश्यते वै दशमभृते मानसात्, तथा मानसभृते दशमात् ।
न चैतद्[1] दशमस्य यथा व्याख्यातम् ।
दशमसं[2]योजनास्तु कर्तव्याः ।
एष आचार्यसमयः ।
अथापि तन्त्रमहर्शान्ति बलिष्ठं ब्रुवते, उ[3]द्याता स्वादिष्ठे दाशमिक्यौ दृश्ये[4]ते ।
अथापि स्थाने[5]न भागा[6]गमेन तन्त्रोपधिना छन्दोमयेनेति ।
स चैव चतुर्विंशो दाशमिकोऽन्ते दृश्यते ।
यद्वेतत् स्वेन नामधेयेनैकाह आदिश्यते इति, बहुधै[7]काहः स्वेन नामधेये-[8]नादिश्यते ।
यथैष एवाश्वत्रि[9]रात्रेऽभिप्लवे [ च[10] ] त्रिकद्रुका इति ।
अथैतानाहीनिकतन्त्रान् ब्रूमहे ।
य[11]थो एतन्न दाशमिकं लिङ्गं दृश्यत इति, [12]दृश्यत इति ब्रूम[13]ः ।
यथा व्याख्यातमस्थानं तु सामव्यूढस्य समू[14]ढो दशरात्रे[15]ः ।
दृश्यते च बहिष्पवमानस्यानावृत्तिः ।
अन्यासु चानुष्टुप्सु दशमतन्त्रं यथा त्रिककुभ[16]ः ॥ ७ ॥

तत् किम्प्रभृतयोऽहीना इति ।
उक्थप्रभृतय इति बह्वृचाः ।
तिस्रो मुहूर्तमात्रा अग्निष्टोमे स्तुतशस्त्रैर्नाभिविधीयन्ते ।
ता अथापि विधीयन्ते इति ।
शश्वदुक्थषोडशिप्रभृतय एव भवन्ति ।
अत्रैष चतुर्थो भागः प्रथमं स्थानं लभते ।
सर्वे भागा आप्यन्ते सर्वे भक्ताः ।
यः स पुराहीनो भवति सोऽद्याहीन इति ।
शश्वदत्यतिरात्रप्रभृतय एव भवन्ति ।
सर्वमादित्यचरित[17]मभिविधीयते ।
उभौ वर्णौ प्रकृ[18]तिरेव ।

1 तद् C. 2 ०योगास्तु C. 3 उद्या-स्वा० C; उद्वता G1, G2, J. 4 ०श्यते B, G1, G2, J, K. 5 स्थानभा० G1, G2, J. 6 भागमेन B. 7 ०धेकाहाः C, G1, G2, K; ०धिकाहाः J. 8 ०न नादि० G1, G2; ०नादिस्यते J; ०श्यन्ते K. 9 ०तिरात्रे ऽ० G1, G2, J; ०त्रे ऽ० K. 10 Wanting in B. 11 यतो B. 12 दृश्यत इति is wanting in C, G1, G2, K. 13 ब्रूम G1, G2, J; ब्रूयाद् K 14 समूढेति B. 15 ०त्रे G1. 16 ०भिः G1, G2, J, K. 17 ०त अभि० B. 18 कृतकृति० C, G1, G2, J, K.

अत[1] ऊर्ध्वं शश्वदह्नद्विरात्रप्रभृतय एव भवन्ति ।
द्वे पृष्ठे चर्यां लभेते[2] ।
द्व्यान्यहानि राथन्तरयाद्दै[3]तानीति ।
तदिदं बृहदतिरात्रे स्थानं तदन्यै[4]स्थानं लभत इति ।
शश्वदह्नस्त्रि[5]रात्रप्रभृतय एव भवन्ति ।
एवमहर्भाजोऽहःसवनभागाः ।
स्वस्थानौ[6]तिरात्रावनुष्टुभिति ।
श[7]श्वदह्नश्चतूरात्रप्रभृतय एव भवन्ति ।
अत्रैष चतुर्थो भागोऽहर्भजते ।
यथा पूर्वे भागा इति ।
शश्वदह्नपञ्चरात्रप्रभृतय एव भवन्ति ।
शुध्यत्युहैतच्चतुर्थमहः पञ्चमेऽहनि [ रा[7]त्रिः सज्जत इति वा ] ।
शश्वदह्नषड्रात्रप्रभृतय एव भवन्ति ।
अत्रैष चतुर्थो भागो भूयिष्ठभाग् भवति ।
शश्वदह्नसप्तरात्रे[8]प्रभृतय एव भवन्ति ।
आसप्तान् नानात्वान्नि[9]वर्तन्ते,[10] नानासाधुरहीन इति ।
शश्वदह्नाष्ट[11]रात्रप्रभृतय एव भवन्ति ।
शुध्यत्युं[12]हैतत् सप्तममहरष्टमेऽहनि रात्रिः सँ[13]ज्जत इति ।
शश्वदह्ननवरात्रप्रभृतय एवं[14] भवन्ति[15] ।
अष्टरात्रे पुनरभ्युद्धृतेषु भागेषु जगत्यस्थाना भवति ।
सौ[16]द्यस्थाना भवति साद्यस्थानं लभत इति ।
शश्वदह्नदशरात्रप्रभृतय एव भवन्ति ।
एतैद्धि[17] परार्ध्यमहर्नानात्वं यद्दै[18]शमम्, नानासाधुरहीन इति ।
शश्वदह्नैकादशरात्रप्रभृतय एव भवन्ति ।
शुध्यत्युं[19]हैतद् दशममहरेकादशेऽहनि रात्रिः सज्जै[20]त इति ॥ ८ ॥
अथायं द्वादशाहोऽहीनो भवती३ सत्रमिति ।

---

1 B adds वा अत. 2 लभते C, G1, G2, J, K. 3 ॰दय स्था॰ C, G1, G2, J, K. 4 ॰त्र्यवि॰ G1, G2. 5 ॰नावत्रोचतुष्टु॰ G1, G2, J; ॰नाइत्राव॰ K. 6 शश्वदह्न॰ ... एव भवन्ति (line 11) wanting in G1, G2. 7 B omits रात्रिः ... वा. 8 ॰त्रे प्र॰ J. 9 ॰नि व॰ C, G1, G2, J, K. 10 ॰ते B. 11 रात्र is wanting in G1, G2, J. 12 ॰त्वाहै॰ G1, G2, J, K. 13 सिध्यत B. 14 एवं J. 15 शश्वदह्न॰ ... लभत इति is wanting in G1, G2. 16 C, J, K omit साद्यस्थाना भवति. 17 अतद्दिप॰ C, G1, G2, J. 18 सद॰ B. 19 ॰त्वहै॰ G1, G2, J, K. 20 सज्यत B.

अहीनो भवतीत्याहुः ।
एको दीक्षेतेति भवति ।
अथाप्याहीनिकान्यहानीत्याचक्षते ।
दाशरात्रिकाण्यहानि ।
अथाप्याह—"यद् गौरीवितेनाहीनानीति ।" cp. PB. 11. 5. 15.
अथाप्याह—"यजमानमेवैतया वर्द्धयन्ति" इति । PB. 11. 11. 4.
अथापि वैरूपे वदति—यजमानं वानुप्रतितिष्ठन्तमुद्गाता प्रतितिष्ठतीति ।
अथाप्यस्मिन् दक्षिणाप्रवादो भवति ।
"ध्वस्ने वै पुरुषन्ती तरन्तपुरुमीढाभ्यां वैतदश्विभ्या[2] [3]सहस्राण्यदित्सताम्" इति । PB. 13. 7. 12.
दक्षिणावन्तोऽहीना इति ।
अथापि शश्वदनेनाध्वर्यवो याजमानं परि[4]चक्षते ।
यथाहीनेनेति ।
सत्रमित्यपरम् ।
उभयं[5]तोऽतिरात्रो भवति ।
अन्यतरतोऽतिरात्रा अहीनाः ।
समाहि[6]तः प्रायणीयोदयनीयो भवति ।
व्यौ[7]हितप्रायणीयोदयनीया[8]ः । cp. PB. 23. 1. 3.
अथाप्यन्वहं गौरीवितो भवति ।
नानास्वरा अहीनाः ।
अथाप्यस्मिन् सत्रवादरूपो भवति ।
यो वै देवानां गृहपतिं वेदसत्रे गृहपतिर्भवति ।
भारद्वाजायना वै सत्रमासत ।
स्तोमो युज्यते सत्रियेभ्यो[9] गर्भः प्रतिष्ठायैव सत्रमासते ।
[ अङ्गिरसो[10] वै सत्रमासत । ]
गौपायनानां वै सत्रमासीनानां सं[11]तः सत्रादुदस्थानों[12] ३ स्थिता३दिति । cp. PB. 13. 12. 5.

1 ०नानि शश्वदङ्गत्रिरात्रप्रभृतय एव भवन्त्येवमहर्भाजोऽह्नःसर्वभागा[2] स्वस्थाना रात्रावनुष्टुविनि शश्वदङ्गचतूरात्रप्रभृतय एव भवन्ति C, G1, G2, J; ०नानीति शश्वदङ्गातिरात्रप्रभृतय एव भवन्त्यनित्यता K. 2 वैद० C, G1, G2, J. 3 सह० G1, G2, J. 4 परिचक्षे G1, G2, J. 5 ०तोत्रि० G1, G2, J. 6 ०तप्रा० B, C, ०ताः प्रा० K. 7 व्याहित० B; व्याहिनि० G1, G2, J. 8 C, J, K add अहीनाः. 9 ०भ्योऽहभ्यः प्र० C, G1, G2, J; ०भ्योऽहर्भ्यः प्र० K. 10 B omits अङ्गिरसो … ०मासत. 11 सन्तः C, G1, G2, J, K. 12 ०स्थाना सन्तो दि० B, ०स्थाता C.

उभयं भवतीति लामकायनः, उभयथा ब्राह्मणं भवति ।
उभयथेदं वेद य[1]त उभयेषामयं प्रत्ययः ।
तद्येऽस्मिन्नहीनवादाः प्रत्ययत्वात्ते भवन्ति ।
स[2]त्रं तु भवति[3] ।
सत्रकारोऽस्य भवति ।
नैवाहीने[4]न सत्रमित्यपरम् ।
तद[5]प्येवमिव ब्राह्मणं भवति—"अन्यस्मै वै कामाय सत्रम्, अन्यस्मै यज्ञो न तत् सत्रेणाऽऽप्नोति, य[6]स्मैकं यज्ञो न तद् यज्ञेनाऽऽप्नोति, यस्मै[7]कꣳ सत्रम् ।" इति । PB. 22. 3. 2; 22. 10. 2; 23. 8. 2.
तद्यथाश्वत्थलो वृक्षो नैवाश्वत्थं इति वदनायनः ।
अनश्वत्थ इति ।
त्रयोऽहीना इति धानञ्जय्यः ।
एकाहाहीनोऽहीनाहीनः सत्राहीन इति ।
अयं ज्योतिष्टोमोऽतिरात्रः षोडशिमाने[8]काहाहीनः ।
[ अ[9]त्र हि न ] किञ्चनैकाहिकं कर्म हीयत इति[10] ।
द्वादशाहोऽहीनो[11]हीनः ।
कि[12]ञ्चनाहीनिकमहर्हीयत इति ।
गवामयनꣳ सत्रो[13]हीनः ।
अत्रे[14] हि न किञ्चन सात्रिकमहर्हीयत इति ।
तदिदं कुशलोद्दि[15]ष्टमिति शाण्डिल्यायनः ।
यस्य स्यादहीने[16]दहीन इति यस्य तु स्याद[17]हर्वर्तयेति द्विरात्रा[18]त् प्रभृतयस्तस्याहीना इति ।
तदपि शश्वद् ब्राह्मणं भवति ।
प्रजापतिर्य[19]ज्ञक्रतूनसृजत ।
अग्निष्टोममुक्थ्यꣳ षोडशिनमतिरात्रम् ।
त[20]मेते द्विरात्रप्रभृतयोऽहर्गणा ब्रुवन् ।

---

1 यं त G1, G2, J, K. 2 सत्रंस्ते भ० B. 3 ०न्ति B, G1, G2, J. 4 ०हीनोन B, G1, G2, J, K. 5 यत्तद० C; यनद० G1, G2, J. 6 यस्यैकं for यस्मैक in C. 7 ०स्थल K. 8 ०ने एकाहीनः G1, G2, J. 9 अत्र ... न wanting in B. 10 Wanting in G1, G2 along with the next three lines. 11 ऽहीना is wanting in C. 12 अत्र हि न कि० C, K; न कि० J 13 सत्रमहीनः C, G1, G2; सत्रहीन J. 14 अत्र हि न is wanting in J. 15 कुशलो भृनयस्तस्याहीना इति तदपि शश्वद् ब्राह्मणं भवद् दिष्ट० C, G1, G2, J. 16 ०दहाना० B, K. 17 ०दहर्वर्त्तयेयेति C; ०दहवर्त्तयेति G1, G2, J, K. 18 ०त्रप्र० C, G1, G2, J, K. 19 य एतैर्द्वि० C.

तस्मान्नापि महासीरिति ।
तस्योदेते[1]ऽहीना इत्यहीना इति ॥ ९ ॥

षष्ठः[2] पटलः

अथातः सत्राणि ।
तेषां द्वादशाहः प्रथमः ।
तस्मिन्नुपक्लृप्तानि ।
तत्र द्वे उपधिस्थानेऽन्तरेणातिरात्रौ[3] [ च[4] ] दशरात्रं च यत्रैकेनाहार्थो भवतीति[5] ।
प्रतमाहरेति[6], एतदेकार्थे दृष्टमिति ।
तस्य तदेव स्थानं यत् संवत्सरे द्व्यहार्थे [ गो[7] ]आयुषी ।
तयोस्तदेव स्थानं यत्संवत्सरे त्र्यहार्थे त्रिककुभांश्चतुरहार्थे[8] प्रतचतुर्थान् पञ्चाहार्थेऽभिप्लवपञ्चाहं[9] षडहार्थेऽभिप्लवः सम्प्लवते ।
एतेन न्यायेनैव एवोत्तरकल्पः[10] क्रमते ।
आचत्वारिंशद्रात्रादुपचीयमानेष्वहस्सु रोहेणोपचयः प्रवर्त्तते ।
एतं रात्रिसत्रन्याय इत्याचक्षते ।
यदेवापवदति तद् व्याख्यास्यामः ।
तस्मिंस्त्रयोदशरात्रे कथं व्यूहसमूहौ[11] ।
समूढः स्यादित्येके ।
समूढो ह्येनं सर्वस्तोमोऽन्ववैतीति[12] ।
व्यूढः स्यादिति गौतमः ।
अनादिष्टः कल्पेन समूढः ।
अथापि छन्दोयोगपर्वणि भागसम्पत्तौ चोपधीयते ।
अथापि कृत्स्नोऽयं दशरात्र इति ।
व्यूढमेवैनं सन्तं समूढः सर्वस्तोमोऽन्ववैतीति ।
अथापि नादेक्ष्यत्[13] सोमसामे[14] गौरीवितस्योदेवयत्[15] ।
कथं दशमधर्मा मानसमिति ।
अकर्तव्या इत्येके ।

---

1 ०देव ते० C. 2 In B only. 3 ०त्रि० C. 4 Wanting in B. 5 ०वति C, G1, G2, J. 6 ०हरेति C, G2, J; ०हेरति G1. 7 Wanting in B. 8 ०त्वतः B. 9 अभिप्लवन्या० Cख, G1, G2, J, K. 10 एवोत्त० C, G1, G2, J, K. 11 ०मूहाविति C, J, K; ०मूहादिति G1, G2. 12 ०न्वये० B. 13 ०क्षत् J. 14 ०सामा G1, G2, J, K. 15 ०वचोदे० G1, G2, J; ०नं चादे० K.

दशमं च लुब्धश्च दशरात्र इति ।

कर्तव्या इति गौतमः ।

अनो[1]कृतेन व्रतेन मानसमो[2]धिनाप्यते ।

अथापि वा[3]चो दश[4]र्कमं मन उपकृतं कृत्स्नोऽयं दशरात्र इति ।

चतुर्दशरात्रे पृष्ठ्य[5] रूढावृत्तं करोति ।

सैषा मध्यावृत्तिः ।

"यत्रातिरात्रात् पृष्ठ्यमुपयन्ति, प्रथमस्याह्नोऽस्य प्रता[6]नुरूपः" इति अजाम्यर्थः । Ārṣ. K. IX. 1. D.

"अथ खल्वै[7]त्र त्रयस्त्रिंशे अ[8]हनी सन्निपततः ।

केनाजामीत्यह्न एव सामान्यात् ।

अपि वा कण्वरथन्तरमनुकल्पयेत् ।

पूर्वस्याह्न आ[9]र्भेव उत्तरस्य वां[10] मध्यन्दिने" पृष्ठ्य उत्तरस्य, विषुवत् स्थानीयो व्रतं पञ्चदशरात्रस्य । Ārṣ. K. V. 132 a.

पृष्ठ्य एवोत्तरस्य, तत्राग्निष्टुतमुपदधाति ।

तत्रप्राये ब्रह्मस्था[11]नेवच्चिकीर्षन् ।

तस्य

'अग्निः प्रत्नेन जन्मना' इति SV. 2. 1061; cp. RV. 8. 44. 12.

होतुराज्यमजाम्यर्थम् ।

व्याख्याता अन्यतोऽतिरात्राः ॥ १० ॥

न्यायकृतमां[12]ससप्तदशरात्रात् ।

सप्तदशरात्रेऽभिप्लवपञ्चाहः सम्प्लवै[13]ते ।

ते खलु स्वतन्त्रा एव त्रिकद्रुकाः स्युरित्येके ।

यावत् षड्[14]कास्येयुः षडे[15]वं सतस्तन्त्राण्यापा[16]दयेयुरिति ।

आपादयितव्यां[17]स्तन्त्राणि मन्ये[18] इति गौतमः ।

अहर्गणप्रत्यवायो ह्येवमभविष्यत् ।

त्र्यहाद् द्व्यहम् ।

एवमिव ब्राह्मणं भवति—"अ[19]नन्ता वा एता यत् पञ्चाहविधाः" इति । PB. 23. 11. 2.

1 भन्वा° B. 2 °मप्रविश्याज्यते C; °मपविश्याप्यते G1, G2, J; °मविश्याप्यात K. 3 वाचा K. 4 दशमं K. 5 वृत्तस्य त्रातिरात्र B; वृत्ति° G1, G2, J. 6 प्रतामनुरूपः C, G1, G2, J. 7 खलु B. 8 बृहती B. 9 आर्मेव C. 10 च G1, G2, J, K. 11 °नेव° G1, G2, J. 12 °ससमाप्त° G1, G2. 13 °वेते C; °वेव G1, G2; °वेवते J, K. 14 षट्तान्ने° C, G2, J, K; षट्न्ने° G1. 15 षडेह वसंत° G1, G2, J, K. 16 °ण्यादाययु° G1; °ण्यापादाययु° G2, J. 17 °व्य° C, G1 G2, J, K. 18 मन्यत C, G1, G2, J, K. 19 अनन्था पञ्चाह एतावद् पञ्चा° B.

अन्ताहर्ह्यतः षष्ठमुपैनीति[1] ।

स वै पञ्चाहतन्त्र एवाभविष्यन्न षष्ठात् किञ्चित् प्रत्याहरिष्यदिति ।

प्रत्याहरेदिति गौतमः ।

एवमिव ब्राह्मणं भवति—"पञ्चमेऽहनि षष्ठस्याह्नस्तृतीयसवनं प्रत्याहरति ।" cp. Ārṣ. K. IX. 2 A.

षडहाविलोपाय स त्वेव स्तोमो यः पञ्चमस्य ।

सा[2] वा[3] सं[4]स्था रथन्तरबृहत्पृष्ठैः ।

"[5]प्रथमस्याह्न एव प्रत्नानुरूपः" इत्यजाम्यर्थः[6] । Ārṣ. K. IX. 1.D; 2. A.

[7]व्यावृत्तये पृष्ठ्याभिप्लवयोः श्यैतनौधसब्रह्मसाम्नां पौष्कलश्रुध्यौष्णिहोः[8] अभीवर्तसुज्ञानयोरन्वपाय[9]स्तासु ।

श्यैतनौधसेऽभीवर्तकारिता हि प्रगाथा इति ।

एतेनैवोत्तरे व्याख्याताः ।

षाष्ठिकानि पञ्चमस्याह्न उक्थानि ।

तत् कुशलमुद्धरति शूर्न्यं द्विपदा अनन्तेनाचिकीर्षीत् ।

तत्रैतदैद्धमयाहं नवमादन्तान्वितम् ।

तद्यदे[10]तांसु

'य[11]जि[12]ष्ठं त्वा ववृमहे' इति । SV. 1. 112; 2. 763; RV. 8. 19. 3.

एता आपन्नाः पञ्चममहर्भवन्तीति ।

"सौश्रवसं मारुतं वेति" विचारयन्ति ।

वैभक्त[14] सौश्रवसं पाञ्चमिकं मारुतम् ।

अथ यत्राभिप्लवो रात्रिसत्रेषु कथं कल्पविचारितानीति ।

[ अकर्तव्यानीति ] शौचिवृ[13]क्षिः ।

नान्यत्र संवत्सरात्, न संवत्सरसम्मितासु च, नेति ।

कर्त्तव्यानीति गौतमः ।

यावन्ति यावन्त्यभ्यस्तुवीते[15] विहितां[16]न्यप्रतिषिद्धानि ।

अथाप्येवमाप्तितरा संवत्सरस्येति ।

1 °पैति K. 2 स B; मा G1, G2, J, K. 3 Wanting in C, G1, G2, J, K. 4 °ष्ठाः C, G1, G2, J, K. 5 पञ्चम° C. 6 °मानाः is suggested. 7 °ह्नोऽभि° B; °ह्नोऽभी° K. 8 गूर्दं C; गूर्दं G1, G2, J, K. 9 °मादन्तान्वितं B; °मानन्दन्तान्वित G1, G2, J. 10 °देवता° B. 11 °वती° B. 12 Wanting in B. 13 शौचिवृक्षि ... कर्त्तव्यानीति (line 24) wanting in G1, G2, J. 14 °रानुसं° C. 15 °वीतेति C. 16 तिहि° G1, G2 J.

विंशतिरात्रे द्व्यहार्थे[1] सति विश्वजिदभिजितौ करोति ।
कस्य हेतोरिति ।
सम्पूर्णं[1] विराजं सत्रमुपक्रान्तम् ।
तावेतौ[2] वैराजौ[3] चापि[4] च सम्पूर्णौ स्तोमैः पृष्ठैरिति ।
तौ[5] यदत्रैव पृष्ठ्यमात्रौ तौ पृष्ठ्यादनन्तरिर्नाविति[6] ॥ ११ ॥

पूर्वस्मिन्नेकविंशेऽतिरात्रे[7] तृतीयोऽभिप्लव[8] आवृत्तो भवती३ अनावृत्त इति[9] ।
अनावृत्त इति शौचिवृक्षिः[10] ।
न ह्यावृत्तिर्विज्ञायते[11] ।
अथापि [ कथं[12] ] सप्ताहो विपुवान् स्यात्[13] ।
आवृत्तं[14] इति गौतमः ।
रोहप्रत्यवरोहौ सत्रमुपक्रान्तो[15] विपुवानिति ।
यद्वनदनादिष्टावृत्तिरिति[16], नाभिप्लवस्यावृत्तिः, कचनादिश्यतेऽर्थ एवावर्तयतीति[17] ।
यद्वेतत् कथं सप्ताहो विपुवान् स्यादिति, दर्श्यते[18], षडहो विपुवत्स्थाने चतुर्दशरात्रे, तथा सप्ताहः[19] संसत्स्विति ।
अथापि यदनावृत्तोऽभविष्यदतिरात्रोऽभिप्लवः, "षडहो[20]ऽतिरात्रः, द्वावभि[21]प्लवौ षडहावतिरात्रः" इत्यभविष्यदिति[22] । cp. PB. 23. 15. 1; AP. Ś. 23. 3 3.
रूढावृत्ताविति[23] त्वेतौ[24] नानादिशति ।
उक्थ्यान्युत्तरस्मिन्[25] स्वरसाम्नो[26][27] ह्रुवते ।
पृष्ठ्योपधानात्तत्र तान्येव द्विवचनानि[28] यान्येकविंशत्यहःकारिणाम्[29] ।
"श्यैतनौधसब्रह्मसामानः स्वरसामानः पौष्कलश्रुध्यौष्णिहाः, विपुवतः सामतृचस्य[30] लोके[31] आभीशवम्[32] ।" Ārṣ. K. IX. 3. C.

1 °र्णां B. 2 तावि° G1, G2, J; ताविमौ K. 3 विराजौ G1, G2. 4 वा पञ्चसूक्तैः स्तो° C; वा पञ्चपूर्णौ स्तो° G1, G2, J. 5 Wanting in C. 6 °न्तरात्रि° B. 7 °दतिरात्रे C, G1, G2, J, K. 8 तृतीयेऽभि° C, G1, G2, J, K. 9 °ति B. 10 ना° G1. 11 °ज्ञा° G1, G2, J. 12 Wanting in B. 13 स्यादिति C, G1, G2, J, K. 14 आवृत्तिरिति B 15 °क्रान्तो G1, G2; °क्रान्क्रान्तो K. 16 वृत्ति G1, G2. 17 °न्तीति B. 18 °श्येते G1, G2, J. 19 °हः सत्स्विति B, °हः सप्त स° G1, G2, J; °हः सप्तं स° K. 20 °हो द्विरात्रः C. 21 °द्वाभि° K. 22 °ष्यद् B. 23 B adds अति. 24 त्वतो C. 25 °न्नुत्तर G1, °न्नुत्तर° G2, J, K. 26 स्वर is wanting in G1. 27 साम्ने G1; °साम्ने G2, J, K. 28 विधनानि C; विवचनानि G1, G2, J, K. 29 °हका° C, G1, G2, J, K. 30 साना° G1, G2, J, K. 31 लोका G1, G2, J, K. 32 अभी° B, G1, G2, J.

अभीवर्तापायात्
'आयन्त इव सूर्यम्' इति । SV. 1. 267; 2. 669; RV. 8. 99. 5.
"विकर्णमिन्द्रक्रतोरपायात्, न्यायक्लृप्तमा सꣳसद्भ्यः ।" cp. Ārṣ. K. IX. 3. c, d.
सꣳसत्सु पृष्ठ्यं विषुवत्स्थानीयं करोति ।
अनिरुक्तं च त्रयस्त्रिꣳशम् ।
तं खलूत्तरस्य त्र्यहस्य स्तोमैरभिविधत्ते वैषुवतीयमत्याधित्सन् ।
"स एष आवृत्तः स्तोमः पूर्वस्त्र्यहः ।
अनुपूर्वस्तोम उत्तरः ।
एतं विशाल[ः पृष्ठ्य इत्याचक्षते ] ।" Ārṣ. K. V. 136a.
पृष्ठ्यस्तोमं पुरस्ताच्चोपरिष्टाच्च रूढावृत्तमनिरुक्तं सप्तमं मात्रासम्पूरणायैकाहम् ।
तत्रानुष्टुभि बृहत्करोति ।
अजाम्यर्थोऽथापि व्रतस्थानो भवति ।
औपोत्तमादुभयसामव्रतमिति ॥ १२ ॥
न्यायक्लृप्तमा त्रयस्त्रिꣳशद्रात्रात् ।
तत्तत् पञ्चाहविहितम् ।
तत् कतमोऽयं पञ्चाह इति ।
पृष्ठ्यस्तोमः पञ्चाहः इति कार्पर्दयः ।
अनादेशे कमन्यं प्रतीयाम ।
अथापि यत्र यत्र त्रैकद्रुको भवति आदिशन्त्येवैनं तत्र [ तत्र ] ।
अथाप्याह—"नानाब्रह्मसामान्युपयन्ति" इति । PB. 24. 1. 14.
एष नानाब्रह्मसामा भवति ।
अथापि दाशरात्रिकैरहोभिः पञ्चाहान् सꣳवर्णयन्तीति [ पृष्ठ्यस्तोमपञ्चाह इत्यादेव ।
अथाप्याह—"त्रिवृता प्रयन्ति त्रिवृतोद्यन्ति" इति । PB. 23. 3. 9; 24. 3. 4; 25. 3. 5.

---

1 ०सद: C. 2 ०श० C, K. 3 वै विषु० C. 4 Wanting in G1, G2, J. 5 एव B. 6 B omits :पृष्ठ्य… ०क्षते. 7 ०ताद्योप० J. 8 ०कस० B; ०के स० G1, G2, J, K. 9 ०मि B. 10 ०र्थे० G1. 11 ०शान्तप० C, G1, G2, J, K. 12 यद् G1, G2, J, K. 13 कर्मो० G1, G2, J, K. 14 कापटव: C, G1, G2, J, K. 15 ०याम: B. 16 य B, G1, G2, J. 17 मादितो वैनं B. 18 Wanting in B, G1, G2, J, K. 19 ०हाद् C. 20 ०यति B. 21 B omits पृष्ठ्यस्तोम… सꣳवर्णयन्ति ( p. 171. 28. ).

त्रिवृत्प्रथमं दाशरात्रिकम् ।
तदेवावृत्तस्योदयनीयं भवति ।
अथापि विश्वजिता ज्ञानीमः ।
विश्वजिद् ह्युत पृष्ठ्यांविलोपानन्वैतीति ।
स वै नूनमभ्यासक्तो[3] ह्यहीनेष्वनभ्यासक्तं तु मन्यामहे ।
न हि विज्ञायतेऽभ्यासङ्ग इति ।
"अभिप्लवपञ्चाह इति गौतमः ।" cp. LŚ. 10. 4. 6.
आदिष्टः कल्पेन भवति ।
अथापि न पृष्ठ्यपञ्चाहः कृतः ।
अकृतो विश्वजितेन पृष्ठ्यस्तोमपञ्चाहः ।
अभिप्लवपञ्चाहस्तु विद्यते ।
तं कृतवदतिक्रामति ।
अथापि कृत्स्नावेव पृष्ठ्यस्तोमौ नाभिप्रयोगं लेभेते ।
कुतो विलुप्तौ लभेयातामिति ।
अथापि शश्वदेकेऽध्वर्यवोऽभिप्लवपञ्चाहमादिशन्ति ।
अथापि कालवविनो व्यूहेनादिशन्ति ।
"अतिरात्रो ज्योतिर्गौरायुः पञ्चाहः ।" PB. 24. 5. 1; cp. AP. Ś. 23. 6. 2; LŚ. 10. 4. 8.
स द्वितीयः स तृतीयो विश्वजिदतिरात्र इति ।
यद्वेतदनादेश इति, आदेशजातिरेषा भवति यदधिकारः ।
यद्वेतद्यत्र यत्र त्रैकद्रुको भवति आदिशत्येवैनं तत्र तत्रेति, पृष्ठ्यस्तोमपञ्चाहो वाऽथादिश्यते, पृष्ठ्यावलम्ब उत्तरे नवरात्रे छन्दोमंवति दशरात्र इति ।
यद्वेतत् "नानाब्रह्मसामान्युपयन्ति" इति, कारणकारितमेतद्भवति । PB. 24. 1. 14.
यद्वेतद्दाशरात्रिकैरहोभिः पञ्चाहान् सवर्णयन्तीति," ] सङ्ख्याभिप्रायेण तदाह—
द्वौ पञ्चाहौ दशरात्र इति ।
यद्वेतत् "त्रिवृता प्रयन्ति त्रिवृतोद्यन्ति" इति, PB. 23. 3. 9; 24. 3. 4; 25. 3. 5.

1 ०जिष्युतत्० G1, G2, J; ०जित् पृ० K. 2 ०व्रतच० J. 3 C adds ऽभ्यासक्तो. 4 नमेते G1, G2, J. 5 ०विश्व० G1, G2. 6 तत्र for तत्र तत्रेति in G1, G2, J, K. 7 ०न्दो भ० J. 8 ०साम० B; ०समा० G1. 9 ०रिणमत० G1. 10 ०द्वै० K. 11 हाद् C. 12 See p. 170 no. 23. 13 ०भाव पत० C, G1, G2, J, K.

उत्तम एतंत्त्रयस्त्रिंशद्रात्रेऽभिनन्दोंब्राह्मणं वदति—"त्रयः पञ्चाहाः पुरस्तात् त्रय उपरिष्टात्" इति । Say. PB. 24. 3. 4.

यद्वेतद्विश्वजितां जानीम इति, नेह पृष्ठ्यार्थेन विश्वजिदागच्छति, विषुवदर्थेनैव आगच्छतीति ।

"नाना ब्रह्मसामान्युपयन्ति" इति । PB. 24. 1. 14.

यद्धि पृष्ठ्योरनुव्यत्यय श्यैतनौधसे श्यैत्यहरिष्यद् भूयान् व्यत्यय आकाङ्क्ष्योऽभविष्यत् ।

प्रतिपद्दामाज्यानामौष्णिहयोरिति श्यैतनौधसवर्णनानि ।

बार्हद्रथन्तरपृष्ठ्याद्यदु विश्वजितं विषुवन्तमितो यदुपैति तस्यैतस्मिन्ननुग्रह इति ॥ १३ ॥

---

1 एकत्रि० B. 2 ०नन्दाम ना० B. 3 ०जितान्ता B. 4 ०र्थे G1, G2. 5 ०जिता ग० Ck. 6 विश्वव० G1; विषु is wanting in J. 7 ०म० B. 8 यदे C, G1, G2, J. 9 ०नुव्यत्यय G1, G2. 10 ०यनिहरिष्यद् तदा B. 11 ०क्षो० K. 12 ०दापेति G1, G2, J.

# अथ दशमः प्रपाठकः[1]

'अग्निर्मूर्धा दिवः ककुत्' इति SV. 1. 27; 2. 882; RV. 8. 44. 16.
उक्थप्रणये करोति ।
कस्य हेतोरिति ।
सामन्या[2] मूर्धन्वती[3] वैषुवतीयेऽभिरूपा[4] ।
तत्रैतत् सत्रासाहीयमापन्नं च विश्वजितम् ।
अपि च वैषुवतीयम्, विषुवत्युभे षोडशिसामनी[5] करोति वैषुवतीयमर्न्या[6]धित्सन् ।
"उत्तमः पश्चाद्द आवृत्तो भवती ३ अनावृत्तः" इति तद् व्याख्यातम् ।
Ārṣ. K.V. 138 a.
पूर्वस्मिन्नेकविंशतिरात्रे सत्रेमासं उत्तरम् ।
तत्रैते संमस्य निदधाति ।
एकविंशतिरात्रं च द्वादशाहं च ।
एते[10] नानात्वक्लृप्त इति ।
पश्चादक्लृप्तमुत्तमम् ।
प्रथमे विषमयुक्ताः[11] पश्चाहाः ।
तत्[12] पश्चाहानेव करवाणि ।
एवं पक्षयोः समाधिरिति ।
तत्र कथं बृहद्रथन्तर इति ।
यथालोकमेव ।
नहीह तद् ब्राह्मणमिति ।

---

1 In C only. 2 साम्ना B; सामान्या C, G1, G2, J. 3 ऊर्ध्ववती B. 4 वि० G1, G2. 5 ०मानि B; ०मानी G1, G2, J. 6 ०न्वा० is suggested. 7 सम्मा० G1, G2, J, K. 8 ०सत C. 9 सा० C. 10 एके B. 11 ०मंन्यु० G1. G2; ०मे यु० J. 12 हन्त C, G1, G2, J, K.

कथमु ब्रह्मसामनीति ।
श्यैतनौधस एव ।
नहीह तद् ब्राह्मणमिति ।
यस्य स्यात् स एवायं पञ्चाह इति ।
तथैव तस्य बृहद्रथन्तरे तथा ब्रह्मसामनीति ।
ते चेद्यथालोकबृहद्रथन्तराः प्रथमस्य, प्रथमस्याह्न एष प्रज्ञानुरूप इत्यजाम्यर्थः ।
येषु वा अयथालोकबृहद्रथन्तराः प्रथम एव ।
अथोपरिष्टाद्येषु ह यथालोकबृहद्रथन्तराः उत्तमे, बृहन्निधनं वार्कजंम्भमनुकल्पयेत् ।
यषु वा अयथालोकबृहद्रथन्तरा उत्तम एव ।
अथ खल्वाह—"यद् विश्वजिति छन्दोमानुपयन्ति" इति । PB. 24. 3. 2.
कस्येदं ब्राह्मणं स्यादिति ।
षाडह्निकानां समस्तानामिति ।
चतुरावृतामिति ।
छन्दसामिति ।
"'त्रिवृता प्रयन्ति त्रिवृतोद्यन्ति' इति । PB. 23. 3. 9; 24. 3. 4.
त्रयः पञ्चाहाः पुरस्तात् त्रय उपरिष्टात्" इति । Sāy. PB. 24. 3. 4.
न्यायक्लृप्तमाविधृतिभ्यो न्यायक्लृप्तमाविधृतिभ्यः ॥ १ ॥

सप्तमः पटलः

अथैता विधृतयो भूतानां विधारिण्यः ।
तत्रैतानहर्गणान् करोति ।
त्र्यहं षडहं दशाहं द्वादशाहमिति ।
तानतिरात्रैर्विधारयति ।
एवं सर्वमेवं विधृतं भविष्यतीति ।
कानि तन्त्राणीति ।
दशरात्रस्तोमविक्लृप्त इत्येके ।

---

1 C, G1, G2, J, K add तु. 2 ब्राह्मणसा० G1, G2; ब्राह्मणस० J. 3 ०मा० B, J, K. 4 यदु B. 5 ०रः B. 6 ०मस्य B. 7 ०यद् G1, G2. 8 B adds उत्तमः. 9 उत्तरे C, G1, G2, J; K omits उत्तमे ... ०न्तरा (line 11). 10 वाक्ज० B. 11 ०र B. 12 Wanting in G1, G2; वं J. 13 B adds त्रय. 14 Wanting in G1, G2, J. 15 In B only. 16 त्र्यह० G1, G2, J, K. 17 ०त्रैर्वि० G1, G2, J, K. 18 ०मिव B, K. 19 ०मं वि० G2, J, K.

ज्योतिष्टोम इति शौचिवृक्षिः ।
अनादेशे कमन्यं प्रतीयाम[1] ।
अथाप्याह—"ज्योतिष्टोमस्याऽयनेन यन्ति" इति । PB. 25. 8. 5.
शतसंवत्सरे ज्योतिष्टोमेन[2] यन्तीति [3]वैतद्योचदिति ।
कौसुरुबिन्द इति गौतमः ।
एते[4] कल्पेनादिष्टे भवतः ।
इहोते[5] तदभिरूपतरं यथोर्ध्वाहीने[6] सत्रे ह्येव समासोऽभिरूपतरः ।
यथोर्ध्वाहीन[7] इति ।
व्याख्यातानि सन्धिषामानि ।
एवं[8] चेत् सन्धिषाम स्यात् ।
"कौत्सस्य लोक उद्वंशीयम्" । Ārṣ. K. IX. 8. a.
एतेनेडाकामश्च सिध्यत्यजामिकल्पश्चेति ।
तद्यदेतासु
'आ त्वा विशन्त्विन्दवः' इति SV. 1. 197; 2. 1010; RV. 8. 12. 22.
एता रात्रेर्विकृतौ[9] दृष्टा इति, नित्यासु वेति विचारयन्ति ।
अर्थकारितमुद्वंशीयम् ।
स किमर्थो नित्याश्चर्यावर्येदिति[10] ।
पञ्चदशानां दशमस्य नानदं षोडशिसाम ।
एवं छन्दसामनन्तरं यस्तदु सन्धिषामैव भवति ।
यथौशनकावे[11] समाचा[12]रयिष्यत्—यथा रथन्तरापचित्या रथन्तरं सञ्चरते[13] ।
अथापि कावं तृतीयसवनेन समधिचा[14]रयिषीत् ।
तद्वशेनौशनम् ।
तत्रैते वैश्वज्योतिषवासिष्ठेऽपुरस्तात् स्तोमे पदानुस्वारे यथौशनकावे[15] ।
एकचिंशेष्वर्कान् करोती[16]त्यन्ते पर्यायिणो[17] हि, स यत्रैव[18]मप्र[19]भृतिष्वन्तपर्यायित्वादेव ।
अथाप्येते सप्तमप्रभृतिषु दशरात्रे दृष्टाः, उपपक्षं द्वादशाहे नवमप्रभृतिषु प्रयुज्येरन्निति ।

---

1 ॰मः C, K. 2 ॰मायनेन C. 3 नै॰ B. 4 एतेन C. 5 इहो C, इलहो G1, G2, J, K. 6 ॰चा॰ C, G1, G2, J, K. 7 ॰चा॰ C, G1, G2, J, K. 8 एवं G1, G2, J; ऐवं K. 9 रात्रैर्विकृतौ G1; रात्रैर्वि॰ G2 10 ॰वा॰ G1, G2, J. 11 ॰नवाके G1, G2, J. 12 संचा॰ B. 13 ॰रेते G1, G2; ॰रे J. 14 ॰चि॰ B. 15 यथौ॰ C; यथाशनकावे G1, G2, J; यथो॰ K. 16 C, G1, G2, J, K omit ती. 17 ॰र्पयि॰ for ॰पर्ययि॰ in C. 18 यत्रवसम॰ ··· उप is wanting in G1, G2, J. 19 ॰मं प्र॰ K.

कावस्यर्क्षु दीर्घतमसोऽर्के एतासां स्थानमापन्नो द्वादशेऽहन्युत्सेधनिषेधौ करोति दशमादन्तान्वितौ।

यमातिरात्रैः, स चादित्यानामष्टावतिरात्रान् करोति, अष्टौ यमा आदित्या इति।

आदित्यानां द्वन्द्वदर्शनादभिप्लवातिरात्राणां द्वन्द्वानि करोति।

अथ खल्वायुष्टोमे चाभिजिति चाजामिकल्पे सौभरं करोति।

तत्खलु हारिवर्णस्यर्क्षु करोति।

एतासां स्थानमापन्नमिति ॥ २ ॥

अथैता आञ्जनाभ्यञ्जनाः प्रजापतीप्सामुपकृताः।

तत्र सर्वस्तोममुपोहयति।

एषोऽरूढस्तोमतः सं स्थातः पृष्ठत इति।

तद् यत् पङ्क्तिं शस्थानम्, एषमपर्वविलोप इति।

उत्तमावभिप्लवावावृत्तौ भवतः ३ अनावृत्ताविति।

अनावृत्ताविति शौचिवृक्षिः।

न ह्यावृत्तिर्विज्ञायते।

अथास्या मध्ये सर्वस्तोमो मध्यस्थानो विषुवानिति।

आवृत्ताविति गौतमः।

प्रतिष्ठाकामसत्र एतस्मिन् स्थाने मैतं करिष्यन् भवति।

नैतदन्यत्र मध्याद्यान्तौ ह्वा भवतीति।

यद्येतदनादिष्टावृत्तिरिति, नाभिप्लवस्यावृत्तिः, क्व च नादिश्यतेऽर्धं पर्यावर्तयतीति।

यद्येतदमध्ये सर्वस्तोम इति, अपर्वविलोपायैतद् भवति।

एष्वयामभ्यामध्ये विषुवन्तं यथा त्रयोदशरात्रे सं सत्स्विति।

"संवत्सरसम्मितासु प्रायणीये चतुर्विंशं प्रतिषिध्यं त्रिवृदेव कार्यम्" इत्याह। cp. PB. 24. 14. 2; LŚ. 10. 5. 1.

"निष्पन्नचोदितत्वादेतदपूर्वं प्रायणीयं चेति।

स्तोमविकारमेके।" cp. LŚ. 10. 5. 2.

---

1 ॰सो हि G1, G2. 2 C, G1, G2, J, K add हि. 3 ॰भासादि॰ C, G1, G2, J, K. 4 ॰स्तोने C, G1, G2, J, K. 5 द्वभि॰ C; दभि॰ G1, G2, J, K. 6 वा॰ C, G1. 7 ॰सर्द् B. 8 अ॰ B. 9 ॰म्या॰ G1, G2. 10 ॰यहारावेति C. ॰यहाराति G1, G2, J, K. 11 ॰नक B. 12 तं B, K. 13 ॰नाद॰ भि॰ C, G1, G2, J, K. 14 G1, G2, J omit वा. 15 ॰प्न॰ C. 16 पूर्तं B; कृत C 17 ॰नो C; ॰ना G1, G2, J, K. 18 वा॰ G1, J, K. 19 G1, G2 omit सर्वस्तोन … ॰मध्ये. 20 ॰प्दव C, G1, G2. 21 C adds तं. 22 J omits कार्य … स्वेव ( p. 177. 1 ).

तस्यैवाधिकाराच्चतुर्विंशं त्वेव कार्यमिति[1] निष्ठा ।

तथाहि ब्राह्मणम्—तौ[2] एताः संवत्सरातिमुपकृताः, तत्र यदेतान्यहान्येव[3] संवत्सरस्य प्रयुक्तमान्यहानि[4] भविष्यन्तीति ।

तृतीयेऽभिप्लव इषोवृधीयंसमन्ते कुर्या[5]न्न कुर्या[6]दिति ।

न कुर्यादित्याहुः ।

पृष्ठ्यसान्निपातिके इमे भवतः ।

न चेह पृष्ठ्यो भवतीति ।

कुर्यादित्यपरम् ।

नानापर्वणोरिमे सन्तानार्थे[8] भवतः ।

नानापर्वतरे[9] चैतेऽहर्गणश्चैको[10]ऽहश्च ।

भूयसा चैव[?] सांवत्सरिकाणां द्रव्याणामभि[11]प्रयोगो भवति ।

अथाप्यत्र विश्वजिदभिजित्[12]संनिपातो भवति ।

एतौ च पृष्ठ्यसदृशाविति ।

"आवृत्तेऽभिप्लवे कतमत् सन्तनि कुर्यादिति ।" cp. LŚ. 10. 5. 4, 6.

"यण्वमित्येके ।" cp. LŚ. 10. 5. 7.

एतदेकार्थे दृष्टम् ।

अथाप्येतदेषामावृत्तानामन्ते भवति मध्योद्[13]यमिदं सत्रमिति ।

अपत्यमित्यपरम् ।

एवं पुरस्ताच्छन्दोमानां द्विष्प्रयुक्तानि भवन्ति ।

सन्तनीत्यपरम् ।

एतदेषामोधं भवति ।

असम्प्राप्तेरन्ततो लोपः ।

शाकरवर्णमित्यपरम् ।

एतदेषामकृतं भवति ।

अथाप्येवं [ सम्प्राप्येयं[15] ] भूयः सांवत्सरिकं द्रव्यमनुगृह्यत इति ॥ ३ ॥

प्रजापतिकामसत्रमुत्तरम् ।

तत्र नवाहान् करोति, न्यूनान्[16] प्रजापतिरिति ।

षडभिप्लवस्य सत्रस्येदं स्थानम् ।

---

1 ॰मिहनिष्पद्युति G1, G2. 2 एता G1, G2, J. 3 ॰वान्य॰ G1, G2, J. K. 4 प्रयु॰ J. 5 ॰न्यम॰ G1, G2. 6 ॰भीये स॰ C, K; ॰द्विये स॰ G1, G2, J. 7 B adds यस्मात्र. 8 ॰र्थो J. 9 ॰र्णोरेवैते॰ C. 10 ॰श्चैहा॰ K. 11 ॰विप्र॰ C, G1, G2, J, K. 12 ॰जिदत्स॰ G1, G2, J; ॰जिपत्स॰ K. 13 ॰द॰ B, G1, G2, J. 14 ॰मथ G1, G2, J. 15 Wanting in B, ॰यः G1, G2. ॰य J 16 ॰न् C.

स चाभिप्लवतामनतिचिक्रमिषन्नेतानेव षडहान् संव्यूह्य चतुरो नवाहान् करोति ।

अथ खल्वत्र भागैस्तोमान् करोति, एते ऽयने दृष्टा इति ।

तेषां यदेवंविधः संस्थायोगः, एवमुभे रूपे षडहरूपं च [ककुभ्रूपं च]।

अथाप्येवं तावत्यः संस्था यथा षण्णामभिप्लवानामिति ।

"उद्धरत्यर्के यो विधृतिषु" दशरात्रे ह्यर्कान् करिष्यन् भवति । Arṣ. K. IX. 10. d.

"राथन्तरेणाह्ना त्रिवृतः प्रतिपद्यते ।

बार्हतेन पञ्चदशान्, राथन्तरेण सप्तदशान्, बार्हतेनैकविंशान्" अन्यवेतान् नवाहान् । Arṣ. K. IX. 10. d.

तत्र व्यत्यासः, कुशलेनोपपद्यत इति ।

प्रतिष्ठाकामसत्रमुत्तरम् ।

तदाञ्जनाभ्यञ्जनाभिर्व्याख्यातम् ।

न्यायक्लृप्तमेकैषष्टिरात्रात् ।

"अथैकषष्टिरात्रं संवत्सरसम्मितास्थानमेव ।" Āp. Ś. 23. 8. 8.

तत्र नवाहमभितः पृष्ठ्यौ करोति ।

एवं सर्वं सांवत्सरिकं द्रव्यमनुगृह्यत इति ॥ ४ ॥

अथ केनासंस्तीर्णान्यभिविदधीतेति ।

रौत्रसत्रन्यायेनेत्याहुः ।

यथा शतरात्रमिति ।

अपि वा दशरात्रम् ।

यतं चान्ते निधायैं सांवत्सरिकाणामह्नां समविभागः सिध्येत् ।

तथा कल्पं कुर्वीत ।

"यथा संवत्सरसम्मितासु ।" LŚ. 10. 5. 1.

अपि वा यत्र भागस्तोमानां समविभागः सिध्येत्, तथा कल्पं कुर्वीत, यथा सवितुः ककुप्सु ।

ज्योतिष्टोमेन वैषः, ऊनस्य पूरयितेति ।

---

1 चतुरभि० C, G1, G2, J, K. 2 संव्यु० C, K; स० G1, G2, J. 3 भागाः स्तो० K. 4 एते या न C, G1, G2, J, K. 5 B omits ककुप्० च. 6 ०न्ते B, G1, J. 7 ०षेतान् B. 8 नवाह्नः G1, G2, J, K. 9 ०नानिम्या० B. 10 ०समै० B; ०संमै० G1, G2, J. 11 अथेतदेक० C, G1, G2, J, K. 12 नम्य० G1, G2, J; नम्यम० K. 13 सर्वां B. 14 ०मुपगृ० J. 15 रात्रि० G1, G2; रात्र ... चान्ते wanting in K. 16 चते G1, G2; चाते J. 17 ०मत्र G1, G2; ०म दत्र J, K. 18 समवहारः B, C, J, K. 19 तस्य C. 20 वैमान० B.

अथ[1] प्रायणीयो[2]दयनीययोरतिरात्रयोरादिशति।

एकत्र षोडशिनं नैकत्र[3]।

तत्र[4] कथं स्यात् षोडशीति।

यथा विराट् संम्पदं[5] सम्पत्स्यमानां[6] मन्येत[7], तथा कल्पं कुर्वीत यथा[8] संवत्सरसम्मितासु।

अपि वा यत्र भागस्तोमानां संविभागः सिध्येत्।

[ द्वादशाहस्य[9] च गवामयनस्य ] स[10] विराट्सम्पदं षोडश्युपकृतः।

अथानुपपद्यमानायां प्रकृतौ[11][12] निर्णीय यथा मन्येत तथा सत्रेषु प्रतिपादयेत्।

तेषां[13] यानि[14] रात्रिसत्रन्यायेन वर्तन्ते[15] षोडशिमन्तौ तत्र, यथा द्वादशाहे[16]।

अथ यत्र रोहप्रत्यवरोहौ सत्रमुपकृतमषोडशिकौ[17] तत्र, यथा गवामयने।

यत्रानुमध्य षोडशी[18] दृश्येतांषोडशिकौ[19] तत्र[20]।

यत्रो[21] न दृश्येत षोडशिमन्तौ तत्र सत्रकामस्य[22]।

अथापि[23] वा चतुष्टोमेष्वषोडशिकौ सर्वस्तोमेषु षोडशिमन्ताविति [ षोडशिमन्ताविति[24] ] ॥ ५ ॥

अष्टमः[25] पटलः

अथातः सांवत्सरिकाणि।

तेषां यद् गवामयनेन सामेति व्याख्यातम्।

तद्यदपवदति[26] व्यावृत्त्यर्थं[27][28] वा तत्।

अपि वा[29] ब्राह्मणेनैव कारणं वदति।

तत्रादित्यानामयनं[30]सुद्भिद्वलभिदौ मात्रासम्पूरणाय करोति।

तत्रैक इन्द्रक्रतौ[31]वुत्सेधनिषेधौ कुर्वन्ति।

एष औत्तरपाक्षिक[32] इति।

---

1 अथा G1, G2, J. 2 ०णीययो० G1, G2, J. 3 चै० G1, G2; से० J. 4 तत् C; wanting in G1, G2, J. 5 G1, G2 omit सम्पदं. 6 ०नान् B; ०माना G1, G2, ०मा J. 7 ०न्योत C. 8 C, G1, G2, J, K omit यथा ... सिध्येत्. 9 B omits द्वादशाहस्य ... ०नस्य. 10 Wanting in C, G1, G2, J, K. 11 प्रा० G1, G2. 12 ०तो J. 13 येषां० G1, G2, J. 14 वा B. 15 ०ते B. 16 B adds च. 17 सत्रिरुपकृतषोडशिनस्त० B. 18 षोडशी दृश्येता is wanting in C, J. 19 ०तरं षो० G1; ०तारं षो० G2, K. 20 यत्र C. 21 यथा B. 22 तत्र कात्स्न्यीय C; सत्रकात्स्न्यीय G1, G2, J. 23 अपि C, G1, G2, J. 24 Wanting in B. 25 In B only. 26 तदप० G1, G2, J. 27 व्यावृत्त्यर्थं ... वदति। त is wanting in G1; वावृत्त्य० G2, J. 28 ०र्थे C. 29 Wanting in C, G2, J, K. 30 ०न उ० C, G1, G2, J, K. 31 ०मातु० B. 32 ०प० B, G1, G2, J, K.

तत्र निन्दा यत् षट् प्रगाथा भवन्ति, अष्टौ प्रागाधिकानीति ।
यथासमाम्नायं त्वेवैवं पक्षयोः समाधिरिति ।
पञ्चदशत्रिवृद्भ्यामुपहिते गोआयुषी, ते पञ्चदशत्रिवृद्भ्यां प्राचिकमेयिषीत् ।
छन्दोमस्तोमं दशरात्रे करोति, पार्ष्णिदछन्दोमा इति ।
तस्यान्ते चतुर्विꣳशे सन्निपेततः ।
तत्र पञ्चविꣳशं करोति ।
नानात्वार्थः स उ चतुर्विꣳश एव भवति ।
चतुर्विꣳशो ह्येवैष एकाहि प्रस्तुत इत्यालोभाद् बृहद्रथन्तरे पृष्ठे ।
अथापि स्तोमक्षात्रेण ।
अथाप्येवं तावन्तः पृष्ठोपाया यथा गवामयने ।
समूहति बार्हद्रथन्तरपृष्ठ्यात्, उद्धरति षोडशिनं चतुर्थात् ।
विराजमन्वपायꣳ स्वराजोपेयुः ।
स्तोमस्य वा लोभात् ।
अथापि यद्यु हैनमेकविꣳशमकरिष्यदुपैष्यच्छान्दोमात् ।
यदि छन्दोममेकविꣳशयात् ।
न चैषं सैकविꣳशे कृतावनेकविꣳशस्तथेह भवतीति ।
अथाप्येवं तावन्तः षोडश्युपाया यथा गवामयने ।
अथाप्येवं पञ्चदशसम्पद् दशरात्रस्य सिध्यति ।
षट्स्तोत्रीयाः पञ्चदशमतिरिच्यन्ते ।
त्रीण्यत्र सन्तनीन्येकप्रस्तावानि तेभ्यः षट् प्रस्ताया लुप्यन्ते ।
एवमेषा पञ्चदशसम्पत् सिध्यतीति ॥ ६ ॥
दशमस्य चतुस्त्रिꣳशम् [एकेऽग्निष्टोमसाम कुर्वते छन्दोमतायै ।
चतुर्विꣳशमेके ।
एकाहस्तोमो भवतीति ।
त्रयस्त्रिꣳशं त्वेव स्यात् ।
क्रियमाणे ह्येवैतस्मिन् पुरा छन्दोमस्तोमम् ।]

---

1 G1, G2 omit तत्र. 2 ॰षट् B. 3 ॰मैषीत् C; ॰मियिषी G1, G2, J, K. 4 पष्ठुक्षा छ॰ C, G1, G2, J, K. 5 ॰पा॰ B, G1, G2, J, K. 6 ॰त्वर्थः G1, G2, J, K. 7 ह्येकाहिक C; एकाहि G1, G2, J; एकाहे K. 8 ॰पृष्ठ्यो C. 9 ॰जा॰ C, J, K. 10 अन्यथा॰ C, G1, G2, J, K. 11 विꣳश॰ … ॰नेक (line 17) is wanting in G1, G2, J. 12 ॰दमविष्यच्छन्दोम्यात् C; ॰दुपविष्यच्छन्दोमात् K. 13 चैकमेक॰ C. 14 तावद् तत् B. 15 ॰मसर॰ C. 16 ॰मि॰ G1, G2, J. 17 एकेऽग्नि॰ … ॰स्तोमम् (line 27) is wanting in B. 18 ॰तायै C, J.

एतदहर्भवतीति, यथा भूंपस्येत ।
अथाप्याह—चत्वारश्छन्दोमा इति ।
एष एव संशय एकस्तोमेषु ।
सर्व एव द्वादशाहो विकृतः स्यादित्येके ।
द्वादशाहे च श्रूयमाणे किमर्थोऽवयवं प्रतीयादिति ।
कृतप्रमाणाः संशयों भवन्तीत्यपरम् ।
ते पश्यामोऽन्यावतिरात्रौ कृत्वाह—अभिजिद् द्वादशाहो विश्वजिद् द्वादशाह इति ।
अथापि नानापदि रात्रेः ससन्धिकायाः स्तोमविकारो विद्यते ।
सा कथं संशयेषु प्रतीयेत ।
अथापि महत्सु स्तोमेषु सन्धिस्तोत्रीयान् प्रत्यकल्पयिष्यत् ।
एतेन सर्व एकस्तोमा व्याख्याताः ।
अप्यहीनेषु, अथ षोडश्येकविंशस्तोमो वा स्यात् ।
अपि वा ये प्राक् त्रिणवत्रयस्त्रिंशाभ्यामहस्तोमास्तेष्वन्वियादेकविंशमुत्तमेष्विति ।
"तौ खल्विमौ द्वौ" दशरात्रौ भवतः ।
उभयत्राह दशमधर्मा मानसे तु विचारयन्ति ।" cp. Ārṣ K. V. 129 b.
पूर्वस्मिन्नित्येके[13] ।
एषोऽयुक्स्तोमो विकृतो नानापृष्ठो धर्मीति ।
उत्तरस्मिन्नित्यपरम् ।
एष स्थानस्थः ।
अथापीदं यदनात्तमेतदन्तेऽभिरूपम् ।
अथाप्येवं व्रतस्य मानस्य चाव्यवायो भवति ।
अथाप्येवं त्रिवृत् पञ्चदशसम्पद् दशरात्रयोः सिध्यति ।
अथापि[16] यत्पूर्वस्मिन्नकरिष्यद् बहुना कृतो मानसमध्यशाययिष्यत् ।
अथापि [ यत् ] पूर्वस्माद् दशरात्राद् यद्वैपैति तस्यैतस्मिन्ननुमाह इति ।
'अग्न आयूंषि पवसे' इति SV. 2. 814, 869; RV. 9. 66. 19.

1 B omits इति. 2 मय० B. 3 C, G1, G2, J, K add द्वादशाहेषु. 4 ०यो G1, G2, J, K. 5 ०तो० G1, G2, J, K 6 सन्धि० B. 7 अथैते० C, G1, G2, J, K. 8 ०मस्ते० B. 9 ०त्तरे० C, G1, G2, J, K. 10 दा C, G1, G2, J. 11 G1 omits भवतः ... दशरात्रो ( p. 182. 14. ). 12 ०भत्राह G2, ०भयत्राह J, K 13 ०स्येष K. 14 ०पृष्ठे C, G2, J, K. 15 चावच्यवायोविष्यद् । G2, J, K 16 B adds यद्. 17 कृतेन C, G2, J, K. 18 Wanting in B, G2, J, K. 19 ०हू० C, K. 20 ०मह K.

उत्तरस्य दशरात्रस्य करोति ।

कस्य हेतोरिति ।

शुंशुत्स्त् सत्रमिदं भवति ।

सैषाग्नेयी पवित्ताभिव्याहारा शुद्ध्यर्थेऽभिरूपा ।

अथाप्याग्नेय्य आङ्गिरसः, सैषाङ्गिरसी वेदतेति ॥ ७ ॥

प्रतिष्ठाकामसत्रमुत्तरम् ।

तत्र षाडह्निकान्मासभाजो रूढावृत्तान्निदधाति ।

एवं सिद्धौ रोहप्रत्यवरोहाविति व्याख्यातम् ।

व्रतं विषुवांस्तत्रोक्तमयनेषु ।

अपि चं पृष्ठ्यस्तोमो विहृतः स्यादिति ।

अथाप्युदाहरन्ति ।

यज्ञसमास उत्तरम् ।

तत्रैतानि ह्युक्तानि स्थानानि ।

अतिरात्रः शौनासीर्यो मासो दशरात्रो महाव्रतमिति ।

कर्तव्यानीत्येके ।

कं पर्व सत्रन्याय इति ।

अकर्तव्यानीत्यपरम् ।

एवं पुराणं वेदयन्ते ।

अथाप्यनादिष्टः प्रायणीयो व्यूढेन भवति ।

"तत्र यत् पुरस्तादतिरात्रमकरिष्यंदलब्धो रोहोऽभविष्यत् ।

अपि च सुत्याः हविर्यज्ञा व्यवेयिष्यन्निति ।" cp. LŚ. 10. 11. 4; Katy. 24. 4. 39.

"यज्ञसमासत्वाद्धोत्रा समासः ।" cp. LŚ. 10. 12. 14.

हविर्यज्ञप्रक्रमत्वात् "अत्सरुकैश्चमसैर्भक्षयन्ति ।" cp. LŚ. 10. 12. 13; Katy. 24. 4. 40; PB. 25. 4. 4; Āp. Ś. 23. 10. 11.

अथ खल्वत्र द्वौ गृहपती सन्निपततः ।

---

1 ०त्रे C, G2, J, K. 2 शिशुंस्सत्र० C; शिशुत्सत्र० G2, J, K. 3 पठिता० C. 4 ०राय B. 5 ०द्वयभि० G2, J, K. 6 ०य B, G2, J; ०या K. 7 भ० G2, J, K. 8 दै० G2, J, K. 9 Wanting in C. 10 ०भो B; ०मो K. 11 ०त B, G2, K; ०तं J. 12 भ्भ्यु० B, अप्यु० G2, J. 13 ह्युदितानि C, G2; ह्युदितानि J. 14 G1 resumes from here (see p. 181 no. 11). 15 C, G1, G2, J, K omit कं. 16 एव G1, G2, J, K. 17 ०र्थं सुत्ते C, G1, G2, J, K. 18 ष्यदेष्य० B. 19 ०प० C. 20 ०मतात् G1, G2, J, K. 21 ०पातत: C, G1, G2, J, K.

होत्राध्वर्येवेनैकेन सुवृत्तये इवै, स एष वृत्त्यर्थ एव द्वितीयः।
स यद् गृहपतिरेतद्गणस्थानमिति।
स्वर्गकामसत्रमुत्तरम्।
तत्र संवत्सराभिप्रयोगो भवति।
एवं यज्ञतपसोरभिवृद्धिरिति।
तत्रोक्तमयनेह तेषां यान्येकाहैर्वैतन्ते गौरीवितानि तानि।
यानि नानाहोभिः सगौरीवितानि तानि।
नानाह्नां हि सन्तानार्थं गौरीवितमिति।
"अथ पुरुषस्य नारायणस्यायने विश्वजिदेवोभयोः पक्षसोः स्यादित्येके।"
cp. LŚ. 10. 13. 4; Katy. 24. 7. 33.
एवं पक्षसोः समाधिरिति।
यथासमाम्नायं त्वेवैमविलोप इति।
अथैतेषु दशसु विचारयन्ति।
कानीमान्यहानि स्युरिति।
ज्योतिष्टोम इत्येके।
एषोऽधिकृतः पुरस्ताद् भवति।
अनापन्नान्येतानि पृष्ठ्यानि।
ज्योतिष्टोमं इत्यपरम्, पृष्ठं गृह्यमाणम् [ अहः ] गृह्णीयादिति ॥ ८ ॥
"अथैतत् क्षुल्लकतापश्चितमित्याचक्षते।" cp. Katy. 24. 5. 8.
"चत्वारो दैक्षा मासाश्चत्वारं औपसदाश्चत्वारः सौत्याः।" cp. Katy. 24. 5. 1.
तस्य कल्पाः।
गवामेवायनस्य प्रथमोत्तमौ पूर्वस्य पक्षसो मासौ स्यातां तथोत्तरस्य।
अथैतं महातापश्चितमित्याचक्षते।
चत्वारो दैक्षा मासाश्चत्वारः सौत्याः।
तस्य कल्पः।

---

1 ०ध्वर्याव० J, ०ध्वर्यवो० K. 2 सुवर्त्तये C, G1, G2, J, K. 3 तु B. 4 ०तादिप्रायेणागे G1, G2, ०रादिप्रायाणागो J. 5 ०पतसो० G1, G2, J, K. 6 का० K. 7 Wanting in J. 8 Wanting in C; G1, G2 repeat it. 9 ०ह्ना C, G1, G2, J, K. 10 देवैवं लोप B; त्वेवैवमविलोप C, G1, G2, J. 11 एषोऽवि० Cक; एष वि० Cख, G1, G2, J, K. 12 ज्यो० C. 13 ०मन् C, G1, G2, J, K. 14 Wanting in B. 15 ०रो G1, G2, J. 16 सौम्याः B, K. 17 गवामयन० C; गवायन० G1, G2, J. 18 ०सोर्मा० C. 19 तथान्तस्य C; तथातस्य G1, G2, J. 20 ०नन् C, G1, G2, J, K. 21 ०त इ० G1, G2, J, K. 22 ०क्षाः संवत्सराश्चत्वार औपसदाश्च० C, G1, G2, J, K. 23 सौत्याः G1, G2. सौत्वाः J.

गवामेवायनं चतुरुपेयुः ।
अपि वैतस्यैव पक्षस्यभिवृद्धे स्याताम् ।
त्रयोविंशतिरयनमासोः पूर्वे पत्तसि स्युः ।
द्वाविंशतिरुत्तरे ।
अपि वैतान्येव प्रथमानि चत्वारि समस्येत् ।
यथा त्रीणीति संवत्सर इति ।
अपि वा ज्योतिष्टोमायनमेव कुर्वीरन् ।
एतेषां यन्मन्येरन् तत् ।
अपि वा यथा गणसंवत्सराणां तथो कल्पं कुर्वीत ।
"अथैतत् शार्कयाणां षट्त्रिंशत् संवत्सरम् ।" PB. 25. 7. 1; cp. Ap. Ś. 23. 11. 11; ĀŚ. II. 6. 5. 16; Katy. 24. 5. 20; ŚŚ. 13. 28. 6.
तरसपुरोडाशमत्रसंरोधात् ।
यद्वः पुरुषस्तदर्थो स्याद् देवतेति ।
ते यन्मांसमया वा श्यामाकमया वोभे आपन्ने, हविष्ट्वमिति ।
अथैतानि महासत्राणि देवानामेव, दीर्घायुषो देवा इति ।
मनुष्याणामपि सिद्धानि स्युरित्यपरम् ।
बहवः संनिविश्य सुनुयुः पुत्राः पौत्राः प्रपौत्रा इति ।
तानि खल्वनतिरात्राण्यविषुवत्कान्यूर्ध्वायनानीमानि भवन्ति ।
तत्र यदतिरात्रं वा विषुवन्तं [ वा ] करिष्यंल्लुब्धो रोद्धोऽभविष्यत् ।
अथापि न कल्पेनादेशो विज्ञायते नो ब्राह्मणेन ।
अथाप्येवं पुराणं वेदयन्ते ।
अथाप्याह—"एकविंशोऽन्ततः स्तोमानां भवति" इति। PB. 25. 8. 6.
शतसंवत्सरेऽनतिरात्रस्यैव सत इति ।
"अथैतदग्नेः सहस्रसाव्यं परमां विराजमुपकृतम् ।" cp. LŚ. 10. 14. 11; ŚŚ. 13. 27. 7.
सहस्रसंवत्सरेप्सामुपकृतं वा सहस्रसंवत्सरेप्सामेवोपकृतं स्यात् ।

1 ०सो B. 2 स्व wanting in G1, G2. 3 ०णि C, G1, G2, J; ०णिनि K. 4 Wanting in G1, G2. 5 तमेषां G1, G2, J, K. 6 शाका० B. 7 तरसपु० B. 8 ०न्नदास्य दे० C; ०त्रादृस्य दे० G1, G2, J; ०न्नास्य दे० K. 9 स्या० C, G1, G2, J, K. 10 ०स्रानां B. 11 Wanting in G1, G2, J. 12 ०स्वति० C, G1, G2, J, K. 13 अत्र K. 14 Wanting in B. 15 ०ष्यंस्तु० C, K; ०ष्यक० G1, G2; ०ष्यस्त० J. 16 मोहो० B. 17 नु C; न G1, G2, J, K. 18 C, G1, G2, J, K add अपि वा.

तत्रोक्तमयनेषु तत्रोक्तमयनेषु ॥ ९ ॥

नैवमः पटलः

स्वर्गकामसत्रमुत्तरम् ।

तद्यत् सारस्वतमेषा स्वर्गोका भवतीति ।

अथैषोऽग्नये कामायेष्टिः पृष्ठशमनार्थैनैव भवति ।

अथ खल्वाह—"तस्यामश्वां च पुरुषीं च धेनुके दद्युः" इति । cp. LŚ. 10. 17. 16; PB. 25 10 22; ĀŚ. II. 6. 6 30; Katy. 24. 6. 8; ŚŚ. 13. 29. 21; Āp. Ś. 23. 13. 6.

केभ्यो दद्युरिति ।

प्रसर्पकेभ्य इत्येके ।

दृश्यते च प्रसर्पकेभ्यो दानम् ।

अथापि वात्यस्तोमेष्वनृत्विग्भ्यो ददातीति ।

पृथगेवेतरस्मा इत्यपरम् ।

कर्तृभिः संयुक्ताः क्रतुदक्षिणा भवन्ति ।

तत्रापरिवर्तमाने किमर्थोऽवयवं प्रतीयादिति ।

अरुणायां कृत्यामुदवसानीयाभिरिष्टिभिर्यजेरन्निति गौतमः ।

एवं वदति सर्वस्यांकर्म भवति ।

अथाप्येषा लोकोक्ता भवतीति ।

सारस्वत एवोत्तरे कुशलं यत् सैन्नतस्तुले ।

"त्रिवृत्पञ्चदशमिन्द्राग्न्योरयनम् ।

एताविन्द्राग्न्योर्भेकी इति यद् गोआयुषी [ इन्द्रकुक्षी ] समाये च ।" PB. 25. 11. 1, 4. Āp. Ś. 23. 13. 7.

अपि चैन्द्राग्निभ्यामत्याधिस्त्रिवृत् पञ्चदशयोरिति ।

त्रिकद्रुकक्लृसमुत्तमस्य ।

1 तचोक्त॰ C. 2 Wanting in C, G1, G2, J, K. 3 In B only. 4 ॰मः स॰ C, G1, G2, J, K. 5 ॰का॰ B. 6 ॰नार्थे॰ B. 7 ॰दत्तं B. 8 पुरुषं B, पुरीषिं C. 9 दत्ता C, G1, G2, J, K. 10 ॰न्ते B. 11 Wanting in G1, G2. 12 ॰वैतरेतरस्मा C, G1, G2, J, K. 13 तत्रातपनिवर्त्यं॰ C, G1, G2, J, K. 14 ॰नाय स्च्युत्॰ B; अरूणामां K. 15 ॰त्रे॰ G1, G2, J. 16 एवमुदक्स॰ C, G1, G2, J, K. 17 ॰स्यं कर्म C, G1, G2, J, K. 18 B adds ते. 19 सन्ननिमंत्वेति B. 20 ॰न्द्रग्न्या॰ G1, G2, ॰न्द्राम्न्या॰ J. 21 ॰नाम् G1, G2, J, K. 22 ॰म्न्यार्भ॰ G1, G2, J. 23 ॰किरिति B. 24 यद् B. 25 ॰षः B. 26 Wanting in B. 27 चैतानम्याम॰ C; चैनान्यान॰ G1; चैनाम्यान॰ G2, J, K. 28 ॰नि॰ B.

पते यदि[1] न दृष्टो[2] इति ।

"यतु विश्वजिदभिजिताविन्द्रकुक्षी" समाये[3] च[4] । ŚS. 13. 29. 25; Ap. Ś. 23. 13. 9.

अपि चार्णवे द्वाभ्यामत्याधिस्त्रिकद्रुकाणामिति ॥ १० ॥

अथैतद्दार्षद्व्रत[6] स्वर्गकामायनम् ।

तस्यैते पुरश्चरणे गौपाल्यं चाग्नीन्धनं च ।

दीक्षाभ्यः प्रथम[7]मिति गौपाल्यमुपसद्भ्योऽग्नीन्धनम् ।

स यद्दृत्विजो[8] वाचार्यस्य[9] वैतौ स्थानिनौ गुरू तयोः प्रेपचरणमभिरूपम् ।

"तदेवं[10] मनुष्येभ्यस्तिरोभवति[11] ।" इति । PB. 25. 13. 4; LŚ. 10. 19. 11; Ap. Ś. 23. 13. 15.

"तत एवारण्यमाविशेत् [ नै[12] ] पुनर्ग्रामं[13]मामजेदिति ।" cp. LŚ. 10. 19. 12.

"स्वर्गं लोकमाक्रमते" इत्येके । LŚ. 10. 19. 13.

"व्यावर्तते[14] ।

श्रेयान् भवति[15]ति वा ।" LŚ. 10. 19. 14.

"अथैतत्तौ[16]रमिष्ट्य[17]यनं विराट्[18]कामायनम् ।" cp. PB. 25. 14. 5; Ap. Ś. 23. 14. 1; LŚ. 10. 20. 1; Katy. 24. 7. 1.

अपि[19] वा संवत्सरसुत्यां[20] नेदीयस्या मात्रयैप्सीत् ।

किमर्थं उ तदिति ।

ज्यायः[21] स्यादिति ।

अननुभूतिजं स्यादिति ।

सिद्धि[22]दर्शी वा स्यात् ।

सिध्यति वै खलु संवत्सरसुत्याया इष्ट्य[23]यनेनाप्तिः ।

तत्रापि सुत्या देवता भवन्ति ।

यावदेव[24]मर्थरूपं[25] च ।

---

1 ऽयने C, K; यदे G1, G2, J. 2 ०ष्ट C. 3 ०प्रायौ B. 4 Wanting in C, G1, G2, J, K. 5 ताभ्या० C, G1, G2, J, K. 6 ०तद्दार्षद्व्रत B 7 प्रति C, G1, G2, J, K. 8 यदृत्वि० G1, G2, J. 9 वाचाभ्यस्य B; तावयस्य G1, G2; तावार्यस्य J, K. 10 ०वं B. 11 ०न्ति B. 12 Wanting in B 13 ०मं मा० B. 14 अभ्यावर्तते B. 15 ०वति B. 16 ०तत्तौ० G1, G2. 17 ०रनिष्ट्यायनं B. 18 स्वर्गकामाय तमेवाभिरूपं C; स्वर्गकामाय तमेव G1, G2, J, K. 19 तदेव for अपि वा in C. 20 सं० B. 21 सामुन्य C; ग्यायत्र G1; ग्यायत्र G2, J, K. 22 सिद्ध० B. 23 दृष्ट्य० G1, G2, J, K. 24 यावद् दे० B. 25 ०र्पां० G1, G2, J, K.

"अदीक्षितः कृष्णाजिनं प्रतिमुञ्चते।" PB. 25. 14. 2; cp. LŚ. 10. 20. 2; Katy. 24. 7. 3; ĀP. Ś. 23. 14. 2.

नवनीतेनाङ्गान्यभ्यङ्क्ते, दीक्षारूपमेतद्भवति।

व्याख्याता इष्टयः।

ई[1]ष्ट्यन्तं वा पश्वन्तं सोमान्तं वा कुर्वीतेति।

उभयोः पृष्ठशमनरूपमेतद् भवति ॥ ११ ॥

"सर्पसत्रे किमयनं स्यादिति।

गवामयनम्।

स्तोमविकृ[2]तमित्येके।" cp. AŚ. II. 6. 5. 7; Katy. 24. 4. 48, 49; ĀP. Ś. 23. 14. 10.

अनादिष्टान्यहानि व्यूहेन भवन्ति।

संवत्सर आदिश्यते।

तत्र किमर्थोऽवयवं प्रतीयादिति।

अथापि विषुवदादेशेन रोहप्रत्यवरोहौ, गवाम[3]यनोत्पा[4]दावेतौ भवतः।

अथाप्याह—"षण्डकुषण्डाव[5]भिगरापगरौ" इति। PB. 25. 15. 3; LŚ. 10. 20. 10.

व्रतेऽभिगरापगरौ भवतः।

कौसुरुबिन्दे प्रत्य[6]वरोह इति गौतमः।

एते कल्पेऽनादिष्टे भवतः।

य[7]द्येतदनादेश इति, आदिष्टे कल्पे न[8] भवतः।

यद्येतद्[9] विषुवदा[10]देशेन रोहप्रत्य[11]वरोहाविति, दृश्यते विषुवानेतयोस्तन्त्रयोः।

अ[12]र्हति वातवतोरयने तथा रोहप्रत्यवरोहाविति।

यद्येतत् "षण्डकुषण्डावभिगरापगरौ" इति, अन्यत्र सतोर[13]वदिष्यत्। ibid.

अपि [14]चेहोपासकयोः।

अपि[15] वा वचनादभिगरापगरौ स्याताम्।

---

1 दीष्टं तं त G1, G2; दीष्ट्यन्त J; दीष्ट्यन्तं K. 2 ॰कृत इत्ये॰ B, C. 3 B omits मयनोत्. 4 प॰ B. 5 ॰वा॰ C. 6 Wanting in C, G1, G2, J, K. 7 अयने तदा॰ B. 8 Wanting in Cख, G1, G2, J, K. 9 यद्येत is wanting in G1, G2, J, K. 10 ॰ता॰ C. 11 ॰प्रव॰ G1, G2, J. 12 इवति वा भवतो॰ B; इति वानवतो॰ G1; इति वातवतो॰ G2, J. 13 ॰तोवरदि॰ G1, G2, J. 14 वेहो॰ C, तेहो॰ G1, G2, J, K. 15 Wanting in G1, G2, J, K.

